THE

# KÂVYALANKÂRA SANGRAHA

BY

## UDBHATA BHATTA

with the commentary

OF

PRATIHÂRENDURÂJA

EDITED BY

MANGESH RÂMKRISHNA TELANG

PUBLISHED BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF THE "NIRṆAYA-SÂGAR" PRESS.

Bombay:

1915.

# काव्यालङ्कारसंग्रहः ।

श्रीमदुद्भटभट्टप्रणीतः ।

श्रीमत्प्रतीहारेन्दुराजविरचितया काव्यालङ्कारसार-
लघुवृत्त्या समेतः ।

अयं

मङ्गेश रामकृष्ण तेलङ्ग इत्येतैः

संस्कृतः ।

मुम्बय्यां

तुकाराम जावजी

इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रेऽङ्कयित्वा प्रकाशितः

शके १८३७ सन १९१५.

मूल्यम् १० आणकाः ।

# प्रस्तावना ।

अस्मिन्भरतखण्डे खल्वद्यावधि बहवः संस्कृतग्रन्थाः संशोध्य मुद्रणद्वारा प्राकाश्यं नीतास्तत्र तत्र पण्डितप्रकाण्डैः । तथापि कतिचन प्राचीनाः प्रबन्धाः प्रकाशनार्हा अपि पुस्तककोशेष्वेव निलीना वर्तन्ते । तेषामन्यतमोऽयं काव्यालङ्कारसंग्रहाख्यः प्रबन्धो योऽद्य महता प्रयत्नेन सहृदयहृदयविनोदाय प्रकाश्यते ।

अस्य काव्यालङ्कारसङ्ग्रहग्रन्थस्य प्रणेता उद्भटभट्टः । उद्भटभट्टस्य भट्टोद्भट-उद्भटाचार्यः इत्यपि नामोल्लेखो ग्रन्थान्तरेषु दृश्यते । उद्भटभट्टः कश्मीरेषु जयापीडः भूपस्य सभापतिरासीदिति कल्हणविरचितराजतरङ्गिणीग्रन्थादवगम्यते । जयापीड-नृपतिराज्यकालस्तु खिस्त ७७९ वर्षमारभ्य ८१३ वर्षपर्यन्तमासीदिति ज्ञायते । अतस्तत्सभापतेरुद्भटभट्टस्यापि जीवितसमयः स एवेति विदुषां निर्णयः ।

उद्भटाचार्येण कुमारसंभवाख्यं काव्यं तथा भामहकृतालङ्कारग्रन्थस्य विवरणं च विरचितमासीदिति ज्ञायते । अत्र प्रमाणं तु अस्यां लघुवृत्तौ "अनेन ग्रन्थकृता स्वोपरचितकुमारसंभवैकदेशोऽत्र उदाहरणत्वेनोपन्यस्तः" पृ० १५ इति "विशेषोक्तिलक्षणे च भामहविवरणे भट्टोद्भटेन एकदेशशब्द एवं व्याख्यातः" पृ० १३ इति च प्रतीहारेन्दुराजस्योक्तिः ।

काव्यालङ्कारसारलघुवृत्तेः प्रणेता श्रीप्रतीहारेन्दुराजस्तु कोङ्कणदेशवास्तव्यः कश्मीरेषु मीमांसाव्याकरणतर्कसाहित्यशास्त्रपारगतभट्टश्रीमुकुलादधीतशास्त्रश्चेति अस्या लघुवृत्तेः प्रारम्भोपसंहारयोः स्थिताभ्यां निम्नलिखितपद्याभ्यां स्फुटं भवति

"विद्वदग्र्यान्मुकुलकादधिगम्य विविच्यते ।
प्रतीहारेन्दुराजेन काव्यालङ्कारसंग्रहः ॥"

"मीमांसासारमेघात्पदजलधिविधोस्तर्कमाणिक्यकोशात्
साहित्यश्रीमुरारेर्बुधकुसुममधोः शौरिपादाब्जभृङ्गात् ।

१ झलकीकरोपाख्यश्रीवामनाचार्यप्रकाशितसटीककाव्यप्रकाशपुस्तकस्य प्रस्तावनायां २१ पृष्ठे द्रष्टव्यम् ।

श्रुत्वा सौजन्यसिन्धोर्द्विजवरमुकुलात्कीर्तिवल्ल्यालवालात्
काव्यालङ्कारसारे लघुविवृतिमधात्कौङ्कणः श्रीन्दुराजः ॥'' इति

प्रतीहारेन्दुराजस्य जीवितकालस्तु निश्चित्य वक्तुं न शक्यते । तथाप्ययं भट्टोद्भटस्य पश्चाद्बभूवेति व्यक्तमेव । अनेन लघुवृत्तौ भामह—वामन—उद्भट—इत्यादि प्राचीनालङ्कारिकाणामेवोल्लेखः कृतः नतु महिमभट्ट—आनन्दवर्धन—काव्यप्रकाशकाराद्यभिनवालङ्कारिकाणाम् । अतोऽयं खिस्तवर्षस्य नवमदशमशतकयोर्मध्ये बभूवेति तर्क्यते ।

अस्य ग्रन्थस्यादर्शपुस्तकमेकमेव पुण्यपत्तनस्थराजकीयपुस्तकालयाधिकारिभिः प्रोफेसर विनायक सखाराम घाटे इत्येतैः संस्करणार्थं दत्वानुगृहीतोऽस्मीति कृतज्ञतया स्मरामि तेषामुपकृतिम् ।

| | |
|---|---|
| कारवारपुरे<br>श्रावण शु० १२ शके १८३७ | विद्वदनुचरः<br>**मङ्गेशशर्मा.** |

# काव्यालङ्कारसारलघुवृत्तेर्विषयानुक्रमणी

# काव्यालङ्कारसारलघुवृत्ता उपलभ्यमानानि ग्रन्थानां ग्रन्थकर्तॄणां च नामानि

श्रीः ।

श्रीमदुद्भटभट्टप्रणीतः

# काव्यालङ्कारसंग्रहः ।

## श्रीमत्प्रतीहारेन्दुराजविरचितया

## काव्यालङ्कारसारलघुवृत्त्या समेतः ।

यल्लक्ष्म्या हसितैः सितैर्धवलितं नर्मोक्तिलीलाजुषः
शौरेः स्फीतगभस्तिकौस्तुभरुचा यच्च क्वचित्पाटलम् ।
अन्यत्र च्छुरितं यदम्बररुचा हेमप्रभादीप्रया
तद्वक्षोऽक्षतशक्रचापशबलव्योमाभमव्याज्जगत् ॥ १ ॥
महिषितवपुषि सुरद्विषि दर्शितभयमभयदं द्युसद्मभ्यः ।
नन्दितसुरेन्द्रवन्दितमङ्घ्रियुगं गौरि तव वन्दे ॥ २ ॥
विद्वदग्र्यान्मुकुलकादधिगम्य विविच्यते ।
प्रतीहारेन्दुराजेन काव्यालङ्कारसंग्रहः ॥ ३ ॥

**पुनरुक्तवदाभासं छेकानुप्रास एव च ।**
**अनुप्रासस्त्रिधा लाटानुप्रासो रूपकं चतुः ॥**
**उपमा दीपकं चैव प्रतिवस्तूपमा तथा ।**
**इत्येत एवालङ्कारा वाचां कैश्चिदुदाहृताः ॥**

अत्रालङ्कारा अष्टावुद्दिष्टाः । तत्रादौ चत्वारः शब्दालङ्कारा निरूपिताः । रूपकादीनां तु चतुर्णामत्र अर्थालङ्कारता । अत्रानुप्रासे रूपके यथाक्रमं त्रिधेति चतुरिति वचनं विप्रतिपत्तिनिरासार्थम् । भामहो हि ग्राम्योपनागरिकावृत्तिभेदेन द्विप्रकारमेवानुप्रासं व्याख्यातवान् । तथा रूपकस्य ये चत्वारो भेदा वक्ष्यन्ते तन्मध्यादाद्यमेव भेदद्वितयं प्रादर्शयत् । अतः स्वाभिमतभेदोपदर्शनद्वारेण एवंविधविप्रतिपत्तिनिरासार्थमुद्देशावस्था-

यामेवानुप्रासस्त्रिधेति रूपकं चतुरिति चोक्तम् । रूपकं चतुरित्यत्र रूपकत्वेन सह एकस्मिन्नर्थे वर्तमाना सत्ता रूपकभेदेष्वावर्तमाना प्रतीयते । अतः प्रतीयमाना यासौ रूपकत्वैकार्थसमवेता सत्तात्मिका भवनक्रिया तदभ्यावृत्तावयं "द्वित्रिचतुर्भ्यः सुच्" ( पा. अ. ५·४·१८ ) इति सुच्प्रत्ययः । रूपकं चतुर्षु भेदेषु चतुरो वारान् भेदात्मना भवतीत्यर्थः ।

तत्र पुनरुक्तवदाभासं प्रोच्यते—

**पुनरुक्ताभासमभिन्नवस्त्विवोद्भासिभिन्नरूपपदम् ॥**

अभिन्नं वस्तु यस्मिन्नुद्भासते तदभिन्नवस्तु । भिन्नं रूपं ययोः पदयोस्ते भिन्नरूपे । अभिन्नवस्त्विव अभीक्ष्णमुद्भासेते भिन्नरूपे पदे यस्मिंस्तदभिन्नवस्त्विवोद्भासिभिन्नरूपपदम् । एवमयं बहुव्रीहिद्वितयगर्भः पञ्चपदो बहुव्रीहिः । तत्रैकोऽभिन्नवस्त्विति बहुव्रीहिः । अपरस्तु भिन्नरूप इति । तद्गर्भश्चायं बहुव्रीहिरभिन्नवस्त्विवोद्भासिभिन्नरूपपदमिति । अनेन च यत्र भिन्नरूपे पदे एकार्थवदाभासेते तत्पुनरुक्ताभासं काव्यमलङ्कार्यं निर्दिष्टम् । यद्यपि पुनरुक्तवदाभासमित्युद्देशे वतिः प्रयुक्तस्तथापि तस्येह गम्यमानार्थत्वादप्रयोगः । उद्देशे त्वेवमनभिधानमभिधावैचित्र्यप्रदर्शनार्थम् । काचित् खलु गम्यमानार्थान्वयेन अभिधा प्रवर्तते, काचित्त्वभिधीयमानार्थान्वयेन । तत्रोद्देशे वत्यभिधीयमानसादृश्यान्वयेन अभिधा उपदर्शिता । इह त्वर्थसामर्थ्यावसेयसादृश्यान्वयेन । तदेवमर्थसामर्थ्यावसेयेन वत्यर्थेनान्वितं पुनरुक्ताभासमत्र काव्यमलङ्कार्यं निर्दिष्टम् । पुनरुक्तवदाभासमाने च पदे तस्यालङ्कारः । अत्रालङ्कार्यं यत्काव्यं तद्धर्मत्वेन पुनरुक्तवदाभासमानयोः पदयोरलङ्कारत्वमुक्तं न तु स्वतन्त्रतया । फलं चैवमभिधानस्य पुनरुक्तवदाभासमानपदसमन्वयस्य अलङ्कारताख्यापनम् । अलङ्कारस्य खल्वलङ्कार्यपरतन्त्रतया निरूपणे क्रियमाणे सुष्ठु स्वरूपं निरूपितं भवति । स्वात्मन्यवस्थितस्य तस्यानलङ्कारत्वात् । समुद्गकस्थितहारकेयूरपारिहार्याद्यलङ्कारवत् । अतः पुनरुक्तवदाभासत्वस्यालङ्कारताख्यापनाय काव्यपरतन्त्रतया निर्देशो युक्त एव ।

तस्योदाहरणम्—

तदाप्रभृति निःसङ्गी नागकुञ्जरकृत्तिभृत् ।
शितिकण्ठः कालगलत्सतीशोकानलव्यथः ॥

तदाप्रभृति सतीवियोगादारभ्य स देवः शितिकण्ठो निःसङ्गः सन् दिवसानतिवाहितवानिति वक्ष्यमाणे श्लोके वाक्यार्थपरिसमाप्तिः । कृत्तिश्चर्म । कालवशेन निवर्तमाना (या) सती (तस्याः) वियोगेन जनितो यः शोकवह्निस्तदुद्भवा पीडा यस्य स तथोक्तः । अत्र नागकुञ्जरशब्दौ शितिकण्ठकालगलशब्दौ च पुनरुक्तवदाभासेते । तथाहि । नागकुञ्जरशब्दयोरुपक्रमावस्थायां गजवाचित्वेन एकार्थत्वं प्रतिभाति । पदार्थान्वयपर्यालोचनया तु तद्बाध्यते । नागशब्दः खल्वत्र हस्तिवाची । कुञ्जरशब्दस्तु तत्प्रशंसावगतिहेतुः । एवं शितिकण्ठकालगलशब्दयोरपि वलीविशेषावच्छिन्नशरीरावयवभेदोपेतार्थाभिधायित्वात्पौनरुक्त्यं संभाव्यमानं कालगलदिति तकारावधिपर्यालोचनया चापसार्यते । तेनात्र पुनरुक्ताभासत्वम् ।

ननु छेकानुप्रासलक्षणादनन्तरं पुनरुक्तवदाभासोदाहरणं पठ्यते । तत्कथं पुनरुक्तवदाभासलक्षणव्याख्यानसमय एव तस्योपन्यासः कृतः । उच्यते । उदाहरणप्रदर्शनमन्तरेण लक्षणार्थस्य दुरधिगमत्वादिहैव तदुपन्यस्तमित्यदोषः । एवमुत्तरत्रापि प्रमेयशब्दानुसारेण ग्रन्थपाठक्रमविपर्यासेन व्याख्यायां नासूयितव्यम् । पाठक्रमादार्थक्रमस्य बलीयस्त्वात् ।

छेकानुप्रासः—

**छेकानुप्रासस्तु द्वयोर्द्वयोः सुसदृशोक्तिकृतौ ।**

द्वयोर्द्वयोरज्झल्समुदाययोः सुष्ठु सदृशे उच्चारणे क्रियमाणे सति छेकानुप्रासो भवति । तथाविधाः समुदायास्तत्रालङ्कारतां प्रतिपद्यन्ते । द्वयोर्द्वयोरिति स्वार्थेऽवधार्यमाणे अनेकस्मिन्निति द्विर्वचनं स्वार्थग्रहणेन वीप्साया निरस्तत्वात् न यावन्तोऽत्र द्विकाः संभवन्ति तेषां सर्वेषामेव सुसदृशत्वं कार्यं, किं तर्हि कतिपयानामेव । वीप्सा हि साकल्ये सति भवति । सा चात्र स्वार्थशब्देन निरस्ता । अवधार्यमाणग्रहणाच्च द्वयोर्द्वयोरेवात्र समुदा-

ययोः सदृशत्वं, नतु त्रयाणां त्रयाणामिति द्रष्टव्यम् । अनेकस्मिन्निति वचनाच्च असकृदेवंविधरूपोपनिबन्धे सति छेकानुप्रासता न तु सकृदिति मन्तव्यम् । परस्परमेकरूपान्विता रसाद्यभिव्यक्त्यनुगुणत्वेन लब्धोत्कर्षा वर्णास्तत्समुदाया वा शोभातिशयहेतुत्वेन काव्ये क्षिप्यमाणा अनुप्रास-शब्देनान्वर्थेनाभिधीयन्ते । छेकशब्देन कुलायाभिरतानां पक्षिणामभिधा-नम् । तदुक्तम्—"छेकान् गृहेष्वभिरतानुशन्ति मृगपक्षिणः" इति । तेषां च कुलायाभिरतत्वादन्येन केनचिदनायास्यमानानामनेनानुप्रासेन स-दृशी मधुरा वागुच्चरति । अतोऽयमनुप्रासश्छेकैर्व्यपदिश्यते छेकानुप्रास इति । अथवा छेका विदग्धाः । तद्वल्लभत्वादस्य छेकानुप्रासता । तस्योदा-हरणम्—

स देवो दिवसान्निन्ये तस्मिञ्शैलेन्द्रकन्दरे ।
गरिष्ठगोष्ठीप्रथमैः प्रमथैः पर्युपासितः ॥

कन्दरो गुहा । गरिष्ठा गुरुतमाः । 'प्रियस्थिर०' (पा. अ. ६. ४. १५७) इतीष्ठनि गुरुशब्दस्य गरादेशः । गोष्ठी विदग्धानामासनबन्धः । प्रथमैः प्रधानैः । प्रमथैर्गणैः । पर्युपासितः सेवितः । अत्र सदेवदिवसशब्दौ इन्द्रकन्दरशब्दौ गरिष्ठगोष्ठीशब्दौ प्रथमप्रमथशब्दौ परिउपासशब्दौ च द्वौ द्वौ अज्झल्समुदायौ सुसदृशावुच्चारितौ तेन छेकानुप्रासता । क्वचित्तु 'निन्ये तस्मिन्' इत्यत्र 'निन्येऽन्यस्मिन्' इति पाठः । तदा चैतदप्युदाहर-णेऽन्तर्भवतीति ।

अनुप्रासः । स च त्रिविधो वृत्तिसंश्रयात् । यद्वक्ष्यति—

"सरूपव्यञ्जनन्यासं तिसृष्वेतासु वृत्तिषु ।
पृथक्पृथगनुप्रासमुशन्ति कवयः सदा" इति ।

अस्यार्थः—त्रिष्वेतेषु यथायोगं रसाद्यभिव्यक्त्यनुगुणेषु वर्णव्यवहारेषु यः सरूपाणां व्यञ्जनानां पृथक् पृथगुपनिबन्धस्तमनुप्रासं कवयः सदेच्छ-न्तीति । अतस्तास्तावद्वृत्तयो रसाद्यभिव्यक्त्यनुगुणवर्णव्यवहारात्मिकाः प्रथ-ममभिधीयन्ते । ताश्च तिस्रः, परुषोपनागरिकाग्राम्यत्वभेदात् ।

तत्र परुषा—

**शषाभ्यां रेफसंयोगैष्टवर्गेण च योजिता।**
**परुषा नाम वृत्तिः स्यात् ह्लह्वह्याद्यैश्च संयुता ॥**

शकारषकारादियुक्तौ वर्णव्यवहारः परुषाख्या वृत्तिः। रेफोपलक्षिताः संयोगाः क्रर्कादयो रेफसंयोगाः। टकारोपलक्षितो वर्गष्टवर्गः टठडढणेति। अस्यां वृत्तौ योऽनुप्रासः स परुषानुप्रासः। तस्योदाहरणम्—

तत्र तोयाशयाशेषव्याकोशितकुशेशया।
चकाशे शालिकिंशारुकपिशाशामुखा शरत् ॥

तोयाशयेषु अशेषं साकल्येन व्याकोशितानि विकासितानि कुशेशयानि पद्मानि यया इति समासः। तथा शालीनां धान्यानां किंशारुभिः शूकैः कपिशानि पिञ्जराणि आशामुखानि दिगवकाशा यस्यामिति समासः। अयं च शकारस्य सारूप्येणोपनिबन्धात्परुषानुप्रासः।

उपनागरिका—

**सरूपसंयोगयुतां मूर्ध्निवर्गान्त्ययोगिभिः।**
**स्पर्शैर्युतां च मन्यन्ते उपनागरिकां बुधाः ॥**

सरूपाणां वर्णानां ये संयोगाः क्कप्पच्च इत्यादयस्तैर्युक्ता। तथा वर्गान्त्यैर्ङञणनमैः ङ्कञ्चण्टन्तम्प इत्यादिरूपतया उपरि ये युक्ताः कादयो मकारान्ताः स्पर्शास्तैर्युक्ता उपनागरिका वृत्तिः। एषा खलु नागरिकया वैदग्धीजुषा वनितया उपमीयते तत उपनागरिका। नागरिकया उपमिता उपनागरिकेति। "अवादयः क्रुष्टाद्यर्थे तृतीयया" इति समासः। तस्यामुपनागरिकानुप्रासः। तस्योदाहरणं च—

सान्द्रारविन्दवृन्दोत्थमकरन्दाम्बुबिन्दुभिः।
स्यन्दिभिः सुन्दरस्पन्दं नन्दितेन्दिन्दिरा क्वचित् ॥

अत्र दकाराख्यः स्पर्शो नकारेणोपरि व्यवस्थितेन युक्तः सारूप्येणोपनिबद्धः। सान्द्रा घना अरविन्दवृन्दोत्था मकरन्दाम्बुबिन्दव इति संबन्धः। सुन्दरस्पन्दं स्यन्दिभिरिति सामान्यभूतः स्पन्दः सुन्दरस्पन्द-

मिति विशिष्टेन स्पन्देन विशेषितो रैपोषं पुष्णातीतिवत् । सुन्दरः स्पन्दो यस्मिन्निति हि सामान्यभूते स्पन्दने अन्यपदार्थे सुन्दरताविशिष्टं स्पन्दनं वृत्तिपदार्थभूतम् । इन्दिन्दिरा भ्रमराः ॥

ग्राम्या—

शेषैर्वर्णैर्यथायोगं कथितां कोमलाख्यया ।
ग्राम्यां वृत्तिं प्रशंसन्ति काव्येष्वादृतबुद्धयः ॥

परुषोपनागरिकोपयुक्तवर्णावशिष्टैर्वर्णैर्लकारादिभिरुपनिबध्यमाना ग्राम्या। तस्या एव च अपरं नामधेयं कोमलेति । कोमलाख्यया कथितामिति संबन्धः । तस्यां चानुप्रासो ग्राम्यानुप्रासः । तस्योदाहरणम्—

केलिलोलालिमालानां कलैः कोलाहलैः क्वचित् ।
कुर्वती काननारूढश्रीनूपुररवभ्रमम् ॥

केलिलोलाः क्रीडालम्पटाः । कलैर्मधुरैः । भ्रमो भ्रान्तिर्विपर्ययप्रत्ययः । अत्र लकारककाररेफाः सारूप्येणोपनिबद्धाः । एवमेतास्तिस्रो वृत्तयो व्याख्याताः । तासु च रसाद्यभिव्यक्त्यानुगुण्येन पृथक् पृथगनुप्रासो निबध्यते तदाह—

सरूपव्यञ्जनन्यासं तिसृष्वेतासु वृत्तिषु ।
पृथक्पृथगनुप्रासमुशन्ति कवयः सदा ॥

अयं श्लोकः सोदाहरणो वृत्तिस्वरूपनिरूपणप्रसङ्गेन व्याख्यातः ।

लाटानुप्रासः—

स्वरूपार्थाविशेषेऽपि पुनरुक्तिः फलान्तरात् ।
शब्दानां वा पदानां वा लाटानुप्रास इष्यते ॥
स पदद्वितयस्थित्या द्वयोरेकस्य पूर्ववत् ।
तदन्यस्य स्वतन्त्र(त्वा)त् द्वयोर्वैकपदाश्रयात् ॥
स्वतन्त्रपदरूपेण द्वयोर्वापि प्रयोगतः ।
भिद्यतेऽनेकधा भेदैः पादाभ्यासक्रमेण च ॥

शब्दानामनुपलभ्यमानसुप्तिङां तथा पदानामुपलभ्यमानसुप्तिङां, उभ-

येषां च शब्दपदानां स्वरूपस्य वर्णात्मनः अभिधेयस्य च निरन्तरशब्दव्यापारगोचरीकृतस्य वाच्यस्यार्थस्याभेदेऽपि फलान्तरात्तात्पर्यभेदात् पुनरुक्तिः सा लाटदेशनिवासिजनवल्लभत्वाल्लाटानुप्रासोऽभिधीयते ।

स च प्रथमं तावत्त्रिप्रकारः । द्वयोः स्वतन्त्रयोर्द्वयोः परतन्त्रयोः स्वतन्त्रपरतन्त्रयोश्च भावात् । तत्र यस्तावद्द्वयोः स्वतन्त्रयोः स द्विप्रकारः । एकैकस्मिन् पदे पदसमुदायात्मके च पादे भावात् । तदुक्तम्—

"स्वतन्त्रपदरूपेण द्वयोर्वापि प्रयोगतः ।
भिद्यतेऽनेकधा भेदैः पादाभ्यासक्रमेण च ॥" इति ।

अत्र हि स्वतन्त्रपदात्मकत्वेन द्वयोः प्रयोगादेकैकपदाश्रयो लाटानुप्रासोऽभिहितः । तस्योदाहरणम्—

काशाः काशा इवोद्भान्ति सरांसीव सरांसि च ।
चेतांस्याचिक्षिपुर्यूनां निम्नगा इव निम्नगाः ॥

आचिक्षिपुरपहृतवन्तः । अत्र काशादयः शब्दा अपरैः काशादिभिः शब्दैः एकरूपा एकाभिधेयाश्च । तात्पर्यभेदेन तु तेषां पुनरुक्तिः । तथा ह्यत्र एकेषां काशादिशब्दानां जातिभेदोपरक्तद्रव्यपरतया प्रयोगः । अपरेषां तु अनन्वयालङ्कारच्छायया उपमानान्तरव्यावृत्तिपरतया । अत्र च स्वातन्त्र्यं पदानां, काशादीनामुपलभ्यमानसुतिङ्रूपत्वात् । एकैकरूपतया चावृत्तेरुपनिबन्धः ।

पदसमुदायात्मकस्य तु पादस्य स्वरूपार्थाविशेषे तात्पर्यभेदेन पुनरुक्तौ पादाभ्यासपरिपाट्या स्वतन्त्रपदाश्रयो लाटानुप्रासो भवति । पादाभ्यासक्रमेण चेति क्रमग्रहणेन सकृद्द्विस्त्रिश्च पादाभ्यासे ये भेदाः संभवन्ति तत्स्वीकारेण पादाभ्यासे लाटानुप्रासस्य प्रवृत्तिः सूचिता । तस्योदाहरणम्—

स्त्रियो महति भर्तृभ्य आगस्यपि न चुक्रुधुः ।
भर्तारोऽपि सति स्त्रीभ्य आगस्यपि न चुक्रुधुः ॥

महत्यप्यागसीति संबन्धः । तथा च सत्यप्यागसीति भर्तृभ्य इति स्त्रीभ्य इति च 'क्रुध द्रुहे'ति संप्रदानता । अत्र एकत्र पादे नायकगताप-

राधविषयत्वेन स्त्रीकर्तृकः क्रोधाभावः प्रतिपादितः । अपरत्र तु नायिकानां यो भर्तृप्रणयातिक्रमात्मकोऽपराधस्तद्विषयो नायककर्तृकः क्रोधाभावोऽभिहितः । अतस्तात्पर्यभेदः स्वरूपार्थाविशेषश्च । पदसमुदायात्मकस्य च पादस्याभ्यासः । एवमयं स्वतन्त्रपदाश्रयो लाटानुप्रासो द्विविधोऽभिहितः । एकैकपदाश्रयः पदसमुदायाश्रयश्च स्वतन्त्रपदाश्रयो लाटानुप्रासः ।

द्वयोरनुपलभ्यमानसुप्तिङोः परतन्त्रयोः शब्दयोर्यो लाटानुप्रासस्तस्यापि द्वैविध्यं, पदद्वितयाश्रयत्वेन एकपदाधारत्वेन च । तदुक्तम्—**'स पदद्वितयस्थित्या द्वयोः'** इति । सोऽनेकधा भेदैर्भिद्यते इति संबन्धः । **तथा द्वयोर्वैकपदाश्रयादिति ।**

पूर्वस्योदाहरणम्—

> क्वचिदुत्फुल्लकमला कमलभ्रान्तषट्पदा ।
> षट्पदक्वाणमुखरा मुखरस्फारसारसा ॥

सारसाः लक्ष्मणाख्याः पक्षिविशेषाः । अत्र कमलषट्पदमुखरशब्दानां स्वरूपार्थाभेदेऽपि तात्पर्यभेदेन पुनरुक्तिः पदद्वितयाश्रयित्वं च । तात्पर्यभेदश्चात्र कमलषट्पदशब्दयोः कारकशक्तिभेदात् । तथाहि । पूर्वः कमलशब्दोऽत्र विकासक्रियाकर्तृत्वपरतयोपात्तः, उत्तरस्तु भ्रमणक्रियाकर्तृभूतषट्पदाधारत्वेन । तथा पूर्वः षट्पदशब्दो भ्रमणक्रियां प्रति कर्तृत्वेनोपवर्णितः, उत्तरस्तु क्वाणक्रियासंबन्धित्वेन । मुखरशब्दौ तु विशेषणभूतं सशब्दत्वं भिन्नार्थनिष्ठतयावगमयतः । तथाहि । पूर्वेण मुखरशब्देन शरन्निष्ठं मौखर्यमवगम्यते, अपरेण तु सारसनिष्ठम् । एवमयं पदद्वितयपरतन्त्रशब्दद्वयाश्रयो लाटानुप्रासोऽभिहितः ।

एकपदाश्रयशब्दद्वितयवर्ती तु **"द्वयोर्वैकपदाश्रयात्"** इत्युक्तः । तस्योदाहरणम्—

> जितान्यपुष्पकिञ्जल्ककिञ्जल्कश्रेणिशोभितम् ।
> लेभेऽवतंसतां नारीमुखेन्दुष्वसितोत्पलम् ॥

अत्र नारीमुखेष्विति वदनानां चन्द्रेणोपमितत्वादसितोत्पलस्य शशकरूपता ध्वन्यते। किञ्जल्कशब्दयोश्चात्र स्वरूपार्थाभेद एकपदाश्रयत्वं तात्पर्यभेदश्च। एकस्य जीयमानतया उपादानात्, अपरस्य जयनक्रियाकर्तृभूता यासौ श्रेणिस्तत्संबन्धित्वेन। एवमयं परतन्त्रयोः शब्दयोर्लाटानुप्रासो द्विविधो निरूपितः।

स्वतन्त्रपरतन्त्रयोस्तु यत्रैकस्य शब्दस्य पदान्तरानुप्रवेशः, अपरस्य तु स्वातन्त्र्येण पदरूपतयावस्थानं तत्र भवति। तदुक्तम्—'**एकस्य पूर्ववत्तदन्यस्य स्वतन्त्रत्वात्**' इति। एकस्य पूर्ववत्पदान्तराश्रयेणावस्थानादित्यर्थः। तस्योदाहरणम्—

पद्मिनीं पद्मिनीगाढस्पृहयागत्य मानसात्।
अन्तर्दन्तुरयामासुर्हंसा हंसकुलालयात्॥

मानसात् सरोविशेषात्। दन्तुरयामासुः महत्त्वाच्छुक्लत्वाच्च उन्नतदन्ता इव चक्रुः। अत्र स्वरूपार्थाभेदेऽपि पद्मिनीशब्दयोर्हंसशब्दयोश्च तात्पर्यभेदात्पुनरुक्तिः। एकस्य पदान्तरानुप्रवेशः, अपरस्य च स्वतन्त्रत्वम्। तात्पर्यभेदस्तु एकस्य पद्मिनीशब्दस्य कर्मरूपत्वात्, अपरस्य च स्पृहाविषयप्रतिपादनार्थत्वात्। तथा एकस्य हंसशब्दस्य दन्तुरणक्रियाकर्तृभूतार्थाभिधायित्वात्, अपरस्य तु कुलसंबन्धित्वात्। एवमयं पञ्चविधो लाटानुप्रासः प्रतिपादितः। स्वतन्त्रपरतन्त्राणां तस्य प्रत्येकं द्विभेदत्वात् स्वतन्त्रपरतन्त्रयोश्च समुदितयोरेकप्रकारत्वात्॥

रूपकम्—

**श्रुत्या संबन्धविरहाद्यत्पदेन पदान्तरम्।**
**गुणवृत्ति प्रधानेन युज्यते रूपकं तु तत्॥**
**बन्धस्तस्य यतः श्रुत्या श्रुत्यर्थाभ्यां च तेन तत्।**
**समस्तवस्तुविषयमेकदेशविवर्ति च॥**
**समस्तवस्तुविषयं मालारूपकमुच्यते।**
**यद्वैकदेशवृत्ति स्यात्पररूपेण रूपणात्॥**

पदान्तरस्य गुणवृत्तेरपरेण पदेन योगे रूपकं भवति । नन्वेवं सति नीलमुत्पलमित्यत्रापि नीलशब्दस्य गुणवृत्तेरुत्पलशब्देन योगे रूपकताप्रसङ्ग इत्याशङ्कयोक्तं—**श्रुत्या संबन्धविरहादिति** । श्रुतिर्निरन्तरार्थनिष्ठः शब्दव्यापारः । तया श्रुत्या अनुपपद्यमानपदान्तरसंबन्धं सत् पदान्तरं गुणवृत्ति यत्रापरेण पदेन युज्यते तत्र रूपकता । यथा—

ज्योत्स्नाम्बुनेन्दुकुम्भेन ताराकुसुमशारितम् ।
क्रमशो रात्रिकन्याभिर्व्योमोद्यानमसिच्यत ॥ इति ।

अत्राम्बुशब्दो निरन्तरार्थनिष्ठशब्दव्यापारगोचरीकृते उदकत्वे वर्तमानो ज्योत्स्नाशब्देन सामानाधिकरण्यं नानुभवति । अम्बुत्वज्योत्स्नात्वयोरेकार्थसमवायाभावात् । अतोऽम्बुगताः शौक्ल्याह्लादकत्वप्रसरणशीलत्वादयो ये गुणास्तत्सदृशज्योत्स्नागतगुणवृत्तिः सन्नम्बुशब्दो ज्योत्स्नायां वर्तते । तेनाम्बुशब्दस्य श्रुत्या निरन्तरार्थनिष्ठेन अभिधाव्यापारेण यः पदान्तरेण ज्योत्स्नाशब्देन संबन्धस्तच्छून्यत्वाद्गुणवृत्तिता । अतोऽत्र रूपकता । नचैवं नीलमुत्पलमित्यादौ श्रुत्या संबन्धविरहाद्गुणवृत्तित्वं, किंतर्हि स्वत एवेति न रूपकताप्रसङ्गः ।

ननु विरुद्धार्थाभिधायिनोः समानाधिकरणयोः शब्दयोर्निरन्तरार्थनिष्ठेन अभिधाव्यापारेण अनुपपद्यमानान्योन्यसमन्वयत्वाद्यद्येकस्य लक्षणया गुणवृत्तित्वमभिधीयते, एवं सति पर्यायेणात्र गुणवृत्तित्वं प्राप्नोति । नियमकरणाभावात् । ततश्च यथाम्बुशब्दस्य ज्योत्स्नाशब्दसामानाधिकरण्याद्गुणवृत्तित्वमुक्तं, तद्वज्ज्योत्स्नाशब्दस्यापि अम्बुशब्दसामानाधिकरण्याद्गुणवृत्तित्वं कथं न स्यादित्याशङ्कयोक्तं **प्रधानेनेति** । प्रधानार्थानुरोधेन उपसर्जनस्य लक्षणया गुणवृत्तित्वमुपपन्नम् । प्रधानवशवर्तित्वाद्गुणानामित्यभिप्रायः । अतश्च प्राकरणिकार्थाभिधायित्वात्प्रधानार्थविषयो यो ज्योत्स्नाशब्दः तदनुरोधेन अम्बुशब्दस्य अप्राकरणिकार्थत्वादप्रधानार्थस्य गुणवृत्तित्वमुपपन्नमिति न पर्यायेण ज्योत्स्नाम्बुशब्दयोः परस्परानुरोधेन गुणवृत्तित्वप्रसङ्गः ।

ननु च ज्योत्स्नाम्बुनेत्यत्र अम्बुनः प्राधान्यं ज्योत्स्नायाश्च गुणभावः ।

तथा हि । एतस्मिञ्श्लोके तद्भावाध्यवसानेन सेकावच्छादितरूपतया सेकात्मकत्वेन यासौ व्योम्नो व्याप्तिरसिच्यतेति प्रतिपादिता, तया स्वसाधनभूतं यत्तदम्भोऽपेक्षितं तदत्र ज्योत्स्नया विशिष्यते ज्योत्स्नैवाम्भ्विति । यदत्र सेकसाधनत्वेनाम्बु अपेक्षितं तज्ज्योत्स्नैवेत्यर्थः । उक्तं च "उपसर्जनोपमेयं कृत्वा तु समासमेतयोरुभयोः । यच्च प्रयुज्यते तद्रूपकमन्यत्समासोक्तम्" इति । एतयोरुभयोरिति । उपमानोपमेययोरित्यर्थः । तत्कथमिदमुक्तं ज्योत्स्नापदस्य प्राधान्यात्तद्वशेनाम्बुशब्दस्य गुणवृत्तित्वं कल्प्यते इति । उच्यते । अत्र खलु द्वेऽवस्थे विद्येते। एका तावज्ज्योत्स्नाया अम्बूकरणावस्था। अपरा तु अम्बुत्वमापादिताया ज्योत्स्नायाः सेकसंबन्धरूपा । तत्र यदा तावज्ज्योत्स्ना अम्बुरूपत्वमापद्यते तदा प्राकरणिकत्वात् ज्योत्स्ना प्रधानम् । अम्बु च तद्विपर्ययाद्गुणः । तदानीं चाम्बुशब्दो ज्योत्स्नाशब्दानुरोधेनाम्बुगतशौक्ल्यादिगुणसदृशगुणयोगाल्लक्षणया ज्योत्स्नायां वृत्तिमनुभवति । तदा च तस्य प्रधानार्थानुरोधाद्गुणवृत्तित्वेन रूपकत्वमुक्तम् । यदा त्वसौ अम्बुशब्द आपादिताम्बुभावज्योत्स्नाभिधायी सन् सेकक्रियया समन्वयमापद्यमानो यदेतदत्र सेकसाधनत्वेनाम्बु उपयुज्यते तज्ज्योत्स्नैवेति ज्योत्स्नया विशिष्यते तदा तस्य न रूपकावस्था । पूर्वावस्थायामेवानुभूतगुणवृत्तित्वात् । अतस्तस्यामवस्थायामसौ अतिशयोक्तिच्छायां भजते । पूर्वावस्थापेक्षयात्वेतद्रूपकमुक्तम् । प्रधानानुरोधेन तत्र गुणेषु वर्तमानत्वात् । रूपकत्वं चात्राध्यारोप्यमाणगतेन रूपेण अध्यारोपविषयस्य वस्तुनो रूपवतः क्रियमाणत्वादन्वर्थं द्रष्टव्यम् ।

अत्र चोपमानवर्तिनो ये गुणास्तत्सदृशगुणदर्शनादुपमेय उपमानगतयोः शब्दरूपयोरारोपः । तत्र त्रयो दर्शनभेदाः । केचिदत्र शब्दारोपपूर्वकमर्थारोपं ब्रुवते, अपरे त्वर्थारोपपूर्वकं शब्दारोपम् । अन्यैस्तु शब्दारोपार्थारोपयोर्यौगपद्यमभिधीयते । अयमेव च पक्षो युक्त इव दृश्यते । तदाहुः—

"शब्दोपचारात्तद्रूपं रूपके कैश्चिदुच्यते ।
ताद्रूप्यारोपतश्चान्यैः शब्दारोपोऽत्र कथ्यते ॥

उपमानगुणैस्तुल्यानुपमेयगतान् गुणान् ।
पश्यतां तु सकृद्भाति तत्र तच्छब्दरूपता ॥" इति ।

**तत्रेति** । उपमेये इत्यर्थः । **तच्छब्दरूपतेति** । उपमानशब्दारोप उपमानरूपारोपश्च ।

तस्य च रूपकस्य द्विप्रकारता । स्वकण्ठेन सकलरूपणाभिधानादेकः प्रकारः । तदुक्तम्—**"बन्धस्तस्य यतः श्रुत्या तेन तत्समस्तवस्तुविषयम्"** इति । श्रुतिर्निरन्तरार्थनिष्ठोऽभिधाव्यापारस्तस्योदाहरणं 'ज्योत्स्नाम्बुना' इत्याद्युक्तम् । शारितं शबलितम् । अत्र हि सर्वेषामेव रूप्यत्वेनोपात्तानां ज्योत्स्नेन्दुताराराात्रिव्योम्नां यथाक्रममम्बुकुम्भकुसुमकन्योद्यानानि रूपकत्वेन स्वकण्ठेनोपात्तानि, न त्वर्थाक्षिप्तं कस्यचिद्रूपणम् । तेन श्रुत्यैवात्र रूपणा । अतः समस्तवस्तुविषयत्वम् । समग्राणि ह्यत्र रूप्यत्वेनाभिमतानि वस्तूनि स्वकण्ठेनोपात्तस्य रूपकस्य विषयः । अयमसावेकः प्रकारः ।

यत्र तु किंचित्स्वकण्ठेन किंचिच्चार्थाद्रूपणं भवति, तत्र श्रुत्यर्थाभ्यां रूपणादपरः प्रकारो भवति । तत्र चैकदेशविवर्तित्वम्, एकदेशविशेषेण स्वकण्ठोक्त्या वर्तनात् । तदुक्तं **'यतश्च श्रुत्यर्थाभ्यां तस्य बन्धस्तेन तदेकदेशविवर्ति च'** इति । तस्योदाहरणम्—

उत्पतद्भिः पतद्भिश्च पिच्छालीबालशालिभिः ।
राजहंसैरवीज्यन्त शरदैव सरोनृपाः ॥

पिच्छाल्यः पक्षपङ्क्तयः । राजहंसा रक्तचञ्चुपादा हंसाः । **अवीज्यन्तेति** । वीजिर्धातुष्वपठितोऽपि शिष्टप्रयोगात् मिलिखचिक्कविक्षपिवद्धातुतया द्रष्टव्यः । अत्र द्वे रूपणे स्वकण्ठेनाभिहिते पिच्छालीबालशालिभिरिति सरोनृपा इति च । तथा हि एकत्र पिच्छाल्यो बालरूपत्वेन रूपिताः, अपरत्र तु सरांसि नृपरूपत्वेन । राजहंसानां चामररूपत्वेन रूपणा अर्थाक्षिप्ता, शरदश्च प्रकृताया नायिकात्वेन । शरन्नायिकया कर्तृभूतया राजहंसचामरैः पिच्छालीबालशालिभिः सरोनृपा वीज्यन्ते स्मेति ह्यत्र वाक्यार्थः । एवमेतौ रूपकस्य समस्तवस्तुविषयैकदेशविवर्तिलक्षणौ द्वौ प्रकारावुक्तौ ।

यदि वा मालारूपकस्य समस्तवस्तुविषयता तत्र ह्येकस्मिन् रूप्ये समुच्चयेन अस्यन्ते क्षिप्यन्ते बहूनि रूपकाणि । तदुक्तं–**'समस्तवस्तुविषयं मालारूपकमुच्यते ।'** यद्वेति प्रकारान्तरोपक्षेपार्थः । तस्योदाहरणम्—

वनान्तदेवतावेण्यः पान्थस्त्रीकालशृङ्खलाः ।
मारप्रवीरासिलता भृङ्गमालाश्चकासिरे ॥

वनान्ता वनैकदेशः । वेण्यः केशपाशाः । कालशृङ्खला अन्तकप्रयुक्ता आकर्षणशृङ्खलाः । मारप्रवीरा मन्मथसंबन्धिनो भटाः। अत्र भृङ्गमालानामेव केवलानां रूप्यत्वेनोपात्तानां तिस्रो रूपणाः कृताः वनान्तदेवतावेण्य इत्येवमादिना । तेनात्र समस्तवस्तुविषयता, एकस्मिन् रूप्ये समुच्चयेन बहूनां रूपणानां क्षिप्तत्वात्—

एकदेशविवर्ति तु पररूपेण रूपणाद्भवति । तदुक्तं **'एकदेशवृत्ति स्यात्पररूपेण रूपणात्'** इति । तस्योदाहरणम् ।

आसारधाराविशिखैर्नभोभागप्रभासिभिः ।
प्रसाध्यते स्म धवलैराशाराज्यं बलाहकैः ॥

आसारो वेगवद्वर्षम् । विशिखाः शराः । अत्र प्रसाध्यत इत्ययं शब्दः श्लेषच्छायया द्वयोरर्थयोर्वर्तते भूषणे उपार्जने च । तत्र भूषणं प्रकृतम् । शरत्समयो ह्यत्र प्रस्तुतः । तत्र च शुक्लैर्बलाहकैर्दिशो भूष्यन्ते । यदुपार्जनं तदप्रकृतत्वादत्र परमन्यत् । तस्य च परस्याप्रकृतस्य उपार्जनस्य यत्तद्रूपं कारककदम्बकं येन तद्रूपवत्क्रियते नृपविशिखराज्यसंग्रामभूम्यात्मकं तेनात्र यथाक्रमं बलाहकासारधारादिङ्नभोभागानां रूप्यत्वेनाभिमतानां रूपणा विहिता । तेनात्रैकदेशवृत्तित्वम् । एकदेशवृत्तीत्यत्र हि एकदा अन्यदा ईशः प्रभविष्णुर्यो वाक्यार्थस्तद्वृत्तित्वं रूपकस्याभिमतम् । विशेषोक्तिलक्षणे च **भामहविवरणे भट्टोद्भटेन** एकदेशशब्द एवं व्याख्यातो यथेहास्माभिर्निरूपितः । तत्र विशेषोक्तिलक्षणम्–"एकदेशस्य विगमे या गुणान्तरसंस्तुतिः । विशेषप्रथनायासौ विशेषोक्तिर्मता यथा" इति । तेनात्र विशेषोक्तिलक्षणवदेकदेशशब्देन अन्यदा प्रभविष्णुर्वा-

क्यार्थं उच्यते, अन्यत्र च अन्यदा प्रभविष्णूपार्जनम् । अप्रकृतं हि तत् श्लेषवशेनात्र नीतं, तेनात्रैकदेशवृत्तिता ॥

दीपकम्—

**आदिमध्यान्तविषयाः प्राधान्येतरयोगिनः ।**
**अन्तर्गतोपमाधर्मा यत्र तद्दीपकं विदुः ॥**

यत्रान्तर्गतोऽर्थसामर्थ्यावसेयत्वादुपमानोपमेयभावो येषां तथाविधानां धर्माणामुपनिबन्धस्तत्र काव्यदीपकं भवति । तथाविधकाव्यविषयत्वाच्च दीपकस्य तत्काव्यं दीपकमित्युपचारात्सामानाधिकरण्यम् । अत्र च धर्माणामेकवारमुपनिबन्धो द्रष्टव्यः । असकृदुपादाने हि तेषां प्रतिवस्तूपमां वक्ष्यति । अत एव चैकदेशवर्तिनामपि तेषां धर्माणां यौ द्वौ उपमानोपमेयभावेन अवस्थितौ वाक्यार्थौ बहवो वा तथाविधास्तदुद्दीपनहेतुत्वाद्दीपकता । यावच्च तेषां धर्माणामुपमानोपमेयभावसमन्वयेनात्रोपनिबन्धस्तावद्बलात्प्राधान्येतरयोगित्वमापतति । उपमेयस्य प्राकरणिकतया प्राधान्यादुपमानस्य च तादर्थ्येन गुणभावात् । एवं च प्राधान्येतरयोगिन इत्ययमत्रानुवादः । प्राप्तार्थत्वात् । प्राधान्यं च इतरच्चाप्राधान्यम् । ताभ्यां योगः संबन्धो विद्यते येषां ते तथोक्ताः ।

अस्य च दीपकस्य त्रैविध्यम्, तेषां धर्माणामादिमध्यान्तवाक्यविषयत्वेनोपनिबन्धात् । तदुक्तम् '**आदिमध्यान्तविषयाः**' इति ।

तत्रादिदीपकस्योदाहरणम्—

संजहार शरत्कालः कदम्बकुसुमश्रियः ।
प्रेयोवियोगिनीनां च निःशेषसुखसम्पदः ॥

अत्र संहरणात्मा धर्मः कदम्बकुसुमशोभाकर्मकत्वेन विरहिणीसुखसम्पत्कर्मकत्वेन च उपनिबध्यमानोऽन्तर्गतोपमः । शरत्समयस्योपवर्ण्यमानतया कदम्बकुसुमश्रीसंहारस्य प्राकरणिकार्थनिष्ठत्वाद्विरहिणीसुखसंपत्संहारस्य चाप्राकरणिकार्थविषयत्वात् । तेनात्रान्तर्गतोपमत्वम्, यथा प्रेयोवियोगिनीनां निःशेषाः सुखसम्पदः संजहार तथा कदम्बकुसुमश्रियो-

ऽपीति । शरत्कालशब्दस्य चात्र शरत्समयः श्लेषच्छायया अन्तकानुरञ्जितो वाच्यः । संहारस्यान्तककर्मत्वात् । अत्र च प्रथम एव वाक्ये संजहारेत्यस्योपनिबद्धस्य द्वितीयवाक्ये अनुषङ्गच्छायया उपजीव्यमानत्वादादिदीपकत्वम् ।

मध्यदीपकस्योदाहरणम्—

विदेशवसतिर्यातपतिकाजनदर्शनम् ।
दुःखाय केवलमभूच्छरच्चासौ प्रवासिनाम् ॥

यातपतिकाः प्रोषितभर्तृकाः । शरदः प्राकरणिकत्वाद्विदेशवसतियातपतिकाजनदर्शनयोश्चाप्राकरणिकत्वादत्रान्तर्गतोपमता । अत्र च यातपतिकाजनदर्शनं दुःखाय केवलमभूदिति मध्यमे वाक्ये प्रवासिदुःखैकहेतुत्वलक्षणो धर्म उपात्तः सन्नाद्यन्ताभ्यां वाक्याभ्यां पूर्ववदुपजीव्यते । तेन मध्यदीपकता ।

अन्तदीपकस्योदाहरणम्—

तदानीं स्फीतलावण्यचन्द्रिकाभरनिर्भरः ।
कान्ताननेन्दुरिन्दुश्च कस्य नानन्दकोऽभवत् ॥

तदानीं शरत्समये । अत्र इन्दुः प्राकरणिकः शरत्समयस्य उपवर्ण्यमानत्वात् । कान्ताननेन्दुस्त्वप्राकरणिकः । अन्ते च सर्वसुखहेतुत्वमुपनिबद्धं सत् पूर्वत्र उपजीव्यते । तेनात्रान्तदीपकता । एवमेतद्दीपकं लक्षितमुदाहृतं च ॥

ननु उपमाया 'उपमा दीपकं च' इति पूर्वमुद्दिष्टत्वात् यथोद्देशलक्षणमिति न्यायात्तस्या एव पूर्वं लक्षणं कर्तव्यम्, पश्चात्तु दीपकस्य । तत्कथमादौ दीपकं लक्षितमिति वक्तव्यम् । उच्यते । अनेन ग्रंथकृता स्वोपरचितकुमारसंभवैकदेशोऽत्र उदाहरणत्वेनोपन्यस्तः । तत्र पूर्वं दीपकस्योदाहरणानि । तदनुसन्धानाविच्छेदायात्र उद्देशक्रमः परित्यक्तः । उद्देशस्तु तथा न कृतो वृत्तभङ्गभयात् । एवमुत्तरत्रापि लक्षणेषु उद्देशक्रमाननुसारणसमाधिर्वाच्यः ॥

उपमा—

यच्चेतोहारिसाधर्म्यमुपमानोपमेययोः ।
मिथो विभिन्नकालादिशब्दयोरुपमा तु तत् ॥
यथेवशब्दयोगेन सा श्रुत्यान्वयमर्हति ।
सदृशादिपदाश्लेषादन्यथेत्युदिता द्विधा ॥
संक्षेपाभिहिताप्येषा साम्यवाचकविच्युतैः ।
साम्योपमेयतद्वाचिवियोगाच्च निबध्यते ॥
उपमानोपमेयोक्तौ साम्यतद्वाचिविच्यवात् ।
क्वचित्समासे तद्वाचिविरहेण क्वचिच्च सा ॥
तथोपमानादाचारक्यच्प्रत्ययबलोक्तितः ।
क्वचित्सा कर्तुराचारे क्यङा सा च क्विपा क्वचित् ॥
उपमाने कर्मणि वा कर्तरि वा यो णमुल्कषादिगतः ।
तद्वाच्या सा वतिना च कर्म सामान्यवचनेन ॥
षष्ठीसप्तम्यन्ताच्च यो वतिर्नामतस्तदभिधेये ।
कल्पप्प्रभृतिभिरन्यैश्च तद्धितैः सा निबध्यते कविभिः ॥

सादृश्यसंबन्धित्वेनोपादीयते यत्प्राकरणिकं तदुपमेयम् । न खलु प्राकरणिकस्यापि सादृश्यसंबन्धित्वेन अनुपादीयमानस्योपमेयता, यथा राज्ञः पुरुषमानयेत्यत्र पुरुषस्य । पुरुषो ह्यत्रानीयमानत्वेन चोद्यमानत्वात्सत्यपि प्राकरणिकत्वे सादृश्यसंबन्धित्वेनानुपादीयमानत्वान्नोपमेयः । सत्यपि च सादृश्यसंबन्धित्वेनोपादाने यस्य प्राकरणिकत्वं नास्ति तस्योपमानत्वं, न तूपमेयत्वमिति प्राकरणिकमित्युक्तम् । तदेवं सादृश्यसंबन्धित्वेनोपादीयमानं यत्प्राकरणिकं तदुपमेयम् । तद्ध्युपमानेन सादृश्यप्रतिपादनद्वारेण समीपे क्षिप्यते तस्मादुपमेयम् । अप्राकरणिकं तु तथाविधमेवोपमानम् । तयोरुपमानोपमेययोर्यत्साधर्म्यं समानो धर्मः तेन धर्मेण संबन्धो यः सा उपमानोपमेययोः सादृश्यद्वारेण सामीप्यपरिच्छेदहेतुत्वादुपमा । तस्याश्चालङ्काराधिकाराच्चेतोहारित्वं लब्धमेव । काव्यशोभावहानां धर्माणां गुणव्यतिरि-

क्तत्वे सत्यलङ्कारत्वात् । गुणाः खलु काव्यशोभाहेतवो धर्माः । ते च माधुर्यौजःप्रसादलक्षणाः । येषां तु गुणोपजनितशोभे काव्ये, शोभातिशयहेतुत्वं तेऽलङ्काराः । यदवोचद्भट्टवामनः—'काव्यशोभायाः कर्तारो धर्मा गुणाः। तदतिशयहेतवस्त्वलङ्काराः'' इति तेनालङ्कारत्वादेवोपमायाश्चेतोहारित्वं लब्धम् । अतश्चेतोहारीत्यनुवादः । प्राप्तार्थत्वात् । उपमानोपमेयभावश्च नात्यन्तं साधर्म्येण उपादाने सति भवति गौरिवायं गौरिति । अत उक्तं **मिथोविभिन्नकालादिशब्दयोरिति** । कालादयोऽत्र शब्दप्रवृत्तिनिमित्तभूता विवक्षिताः । केषांचित्खलु शब्दानां स्वार्थे प्रवर्तमानानां कालः प्रवृत्तिनिमित्तम्, यथा वसन्तादीनाम् । केषांचित्तु दिक्, यथा प्राच्यादीनाम् । केषांचिज्जातिर्यथा गवादीनाम् । शुक्लप्रभृतीनां तु गुणः । गच्छत्यादीनां क्रिया । राजपुरुषादीनां स्वस्वामिभावादिः संबन्धः । एवमन्यदप्यनुसर्तव्यम् । मिथः परस्परं विभिन्नाः कालादयः प्रवृत्तिनिमित्तभूता ययोः शब्दयोस्तथाविधौ शब्दौ वाचकौ ययोरुपमानोपमेययोरिति बहुव्रीहिगर्भो बहुव्रीहिः । गौरिवायं गौरित्यभिधाने तु न प्रवृत्तिनिमित्तभेदः । गोत्वस्यैवैकस्य प्रवृत्तिनिमित्तत्वात् । तेन एवंविध उपमानोपमेयभावो न भवति । 'उपमा तु तत्' इत्यत्र वाक्ये तुशब्दोऽलङ्कारान्तरे व्यतिरेके । उपमा पुनरेवंप्रकारेत्यर्थः ।

एषा चोपमा द्विधा, पूर्णा लुप्ता च । पूर्णा यत्र चतुष्टयमुपादीयते उपमानमुपमेयं तयोश्च साधारणो धर्मः सौन्दर्यादिरुपमानोपमेयभावस्य द्योतक इवादिः । साच पूर्णा त्रिविधा, वाक्यसमासतद्धितावसेयत्वात् । तत्र वाक्यावसेयायाः श्रौतत्वार्थत्वभेदेन द्वैविध्यम् । अव्ययावसेया श्रौती । अव्ययं हि लुप्तविभक्तिकत्वेन उपमानोपमेययोरेकतरत्राप्यविश्रान्तत्वादुभयोरप्युपमानोपमेययोरुपमितिक्रियाविषयतया यथायोगं कर्मकरणभावात्मकं संबन्धमेवद्योतयति । अतस्तत्र श्रौती उपमा । तदुक्तम्—**'यथेवशब्दयोगेन श्रुत्यान्वयमर्हति'** इति । यथेवशब्दौ चात्रोपलक्षणम् । अव्ययान्तरादपि वाशब्दादेः तेन रूपेण उपमानोपमेयभावस्यावगतेः ।

यथा—

तां जानीयाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम् ॥

तत्र यथाशब्दयोगे तस्या उदाहरणम्—

क्षणं कामज्वरोत्थित्यै भूयः संतापवृद्धये ।
वियोगिनामभूच्चान्द्री चन्द्रिका चन्दनं यथा ॥

अत्र चान्द्री चन्द्रिका उपमेया । चन्दनमुपमानम् । कामज्वरोत्थिति-हेतुत्वं संतापवृद्धिनिबन्धनत्वं चानवस्थितं साधारणो धर्मः । यथा-शब्दश्चाव्ययत्वेन लुप्तविभक्तिकत्वादुपमानोपमेययोरेकतरस्मिन्नर्थेऽविश्रान्तः श्रौतेन रूपेणोभयाधारमुपमानोपमेयभावमवद्योतयति । तेनेयं संपूर्णा श्रौती च । एवमिवशब्दयोगेऽप्युदाहरणं योज्यम् ।

नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः ।
तरुण्य इव भान्ति स्म चक्रवाकैः स्तनैरिव ॥

एवमियमव्ययोपदर्शिता श्रौती संपूर्णा वाक्योपमोक्ता ।

या तूपमा सदृशादिभिः पदैः श्लिष्टा तस्यां न श्रौतेन रूपेण उभयानुयायितया उपमानोपमेयभावोऽवगम्यते, अपि त्वर्थात् । सदृशादीनां पदानामुपमानोपमेययोरेकत्रैव विश्रान्तेः । अन्यत्र च तद्गतसादृश्यपर्यालोचनया तत्संबन्धित्वावगतेः । तेनासौ आर्थी । तदुक्तं **'सदृशादिपदाश्लेषादन्यथा'** इति । अन्यथेति । अश्रौतेन रूपेणेत्यर्थः । तस्या उदाहरणम्—

प्रबोधाद्धवलं रात्रौ किञ्जल्कालीनषट्पदम् ।
पूर्णेन्दुबिम्बप्रतिममासीत्कुमुदकाननम् ॥

अत्र कुमुदकाननं विकसितं किञ्जल्कालीनषट्पदत्वविशिष्टमुपमेयम्, पूर्णेन्दुबिम्बमुपमानम्, धवलत्वं साधारणो धर्मः । प्रतिमाशब्द उपमानो-

पमेयभावावगतिहेतुः । स च उपमाने विश्रान्तः । तथाहि । पूर्णेन्दुबिम्बं प्रतिमा प्रतिबिम्बं सदृशमस्येति बहुव्रीहिरत्र क्रियते । तेन प्रतिमाशब्द उपमाने विश्रान्तः । तेन चोपमाने विश्रान्तेनापि अर्थादुपमेयस्य सादृश्यमवगम्यते । सादृश्यस्योभयाधिष्ठानत्वात् । यदापि च पूर्णेन्दुबिम्बेन प्रतिममिति तृतीयातत्पुरुषस्तदाप्युपमेये स्वकण्ठेनाभिहितं सादृश्यम् । उपमाने च तस्यार्थात्प्रतिपत्तिः । अतो बहुव्रीहौ उपमानगतसादृश्यपर्यालोचनया उपमेयत्वमवगम्यते । तत्पुरुषे तु उपमेयवर्तिसादृश्यविचारेण उममानस्योपमानत्वावगतिरित्यार्थोऽत्रोपमानोपमेयभावः । अत्र च उपमेयवर्तिकिञ्जल्कालीनषट्पदत्वाभिधानसामर्थ्यादपरमपि साधर्म्यमनभिहितमसितोदरत्वलक्षणमाक्षिप्तम् । यथा पूर्णेन्दुबिम्बं शशलाञ्छनत्वादसितोदरमेवं कुमुदकाननमपि किञ्जल्कालीनषट्पदत्वादिति । अतोऽसितोदरत्वलक्षणं धर्ममपेक्ष्य लुप्तैकदेशत्वाल्लुप्तापीयमुपमा । 'नेत्रैरिवोत्पलैः' इत्यादौ तु यद्यपि नेत्रोत्पलादीनां समानधर्मा दीर्घत्वनीलत्वादयः स्वशब्देन नोपात्तास्तथापि भान्तीत्यभिधीयमानार्थे तेषामनुप्रवेशात्संपूर्णत्वमेवोपमायाः, चतुष्टयोपलम्भात् । नेत्रादीनि ह्यत्रोपमानानि । उत्पलादीन्युपमेयानि । भानं दीर्घत्वनीलत्वादिविशेषणपर्यन्तं साधारणो धर्मः । इवशब्दश्च उपमानोपमेयभावावगतिहेतुः । तेनेयमुपमासंपूर्णैवा प्रबोधाद्धवलमितीयं त्वसितोदरत्वापेक्षया लुप्तत्वेनाप्युक्ता । समासोपमा चैषा पूर्णेन्दुबिम्बप्रतिममिति समासस्य विहितत्वात् । यदा त्वत्र वाक्योपमा विवक्षिता भवति तदैतदेवोदाहरणं तदुदाहरणार्थत्वेन 'अखण्डेनेन्दुना तुल्यमासीत्कुमुदकाननम्' इत्येवं परिणमयितव्यम् ॥

एवमेषा संपूर्णा वाक्यावगम्या द्विविधोपमा प्रतिपादिता श्रौती आर्थी च। समासावगम्या त्वार्थत्वेन एकप्रकारैवोक्ता ॥

या तु तद्धितावसेया संपूर्णा तस्या अपि द्वैविध्यं श्रौतत्वार्थत्वभेदेन । तत्र तस्येवेत्यनेन हि यो वतिर्विधीयते तस्य इवार्थे विधीयमानत्वादिवशब्दवच्छ्रौतेन रूपेण उभयानुयायितया उपमानोपमेयभावावगतिनिबन्ध-

नत्वम् । यः पुनस्तेन तुल्यमिति तुल्यार्थे वतिर्विधीयते ततो ब्राह्मणेन तुल्यमधीते ब्राह्मणवदधीते क्षत्रिय इत्युपमेये यत्तदध्ययनक्रियाद्वारेण विश्रान्तं तुल्यत्वं तत्पर्यालोचनया अर्थादुपमानस्योपमानत्वमवगम्यते । तेनार्थस्तत्र उपमानोपमेयभावः । तदुक्तम्—**'वतिना च कर्मसामान्यवचनेन । षष्ठीसप्तम्यन्ताच्च यो वतिर्नामतस्तदभिधेये'** इति । कर्मसामान्यवचनो वतिः 'तेन तुल्यं क्रिया चेद्वतिः' (पा. अ. ५. १. ११५.) इति क्रियातुल्यत्वेऽभिधानात् । तेन चाभिधीयते उपमा । वाच्येति पूर्वोपक्रान्तमत्रानुषज्यते । षष्ठ्यन्तात्सप्तम्यन्ताच्च नामतो नाम्नः प्रातिपदिकादिति संबन्धः ॥

तत्र पूर्वस्या उदाहरणम्—

> अपि सा सुमुखी तिष्ठेद्दृष्टेः पथि कथंचन ।
> अप्रार्थितोपसंपन्ना पतितानभ्रवृष्टिवत् ॥

अप्रार्थितोपसंपन्ना दृष्टेः पथि कथंचन पतिता तिष्ठेदिति संबन्धः । अत्रानभ्रवृष्टिरुपमानम्, सुमुखी उपमेया । अप्रार्थितोपसंपन्नत्वे सति दृष्टिगोचरपतितत्वेनावस्थानं साधारणो धर्मः । वतिश्च क्रियातुल्यत्वे विधीयमान उपमेये क्रियाद्वारेण शब्देन वृत्तेन विश्रान्तः संस्तुल्यत्वपर्यालोचनयोपमानस्योपमानत्वमवगमयति । ततोऽत्रार्थादुपमानोपमेयभावः प्रतीयते । तेनेयं संपूर्णा आर्थी च तद्धितावसेया ।

द्वितीयस्या उदाहरणम्—

> किं स्युरुत्कलिका मद्वत्तस्या अपि निरर्गलाः ।
> अकाण्डोड्डामरानङ्गहतकेन समर्थिताः ॥

अकाण्डोड्डामरोऽनवसरे उद्भटः । प्रचण्ड इति पाठान्तरम् । उत्कलिकाः उत्कण्ठाः । अत्रास्मदर्थ उपमानम् । तच्छब्दार्थ उपमेयः । मन्मथेन समर्पिता यास्ता निरर्गलाः उत्कलिकास्तत्कर्तृकं भवनं साधारणो धर्मः । वतिश्चेवार्थे विधीयमानत्वादिवशब्दवदुपमानोपमेययोरेकतरत्राप्यविश्रान्तः श्रौतेन रूपेणोपमानोपमेयभावमेव द्योतयति । तेनेयं संपूर्णा श्रौती च

तद्धितावसेया । अत्र तु तस्या अपीति पाठे षष्ठ्यन्ताद्वतिर्विधेयः । यदा तु तस्यामपीति पाठस्तदा सप्तम्यन्तात् । यदुक्तम् 'उपमाने यः संशयः स उपमेयाद्व्यावर्तत' इति । एवमेषा वाक्यसमासतद्धितावसेया संपूर्णा त्रिविधोपमा प्रतिपादिता । तत्र च वाक्यतद्धितावसेययोरुपमयोः प्रत्येकं श्रौतत्वार्थत्वभेदेन द्वैविध्यमुक्तम् । समासावसेयायास्त्वार्थत्वमेव । अतः पञ्चप्रकारैषा संपूर्णा ।

या तु लुप्तैकदेशत्वाल्लुप्तोपमा सा संक्षेपोपमा । तस्याश्च पञ्चविधत्वं वाक्यसमाससुब्धातुकृत्तद्धितावसेयत्वात् । तत्र वाक्ये या संक्षेपोपमा सा पूर्वमुदाहृता 'अखण्डेनेन्दुना तुल्यमिति' । अत्र ह्यसितोदरत्वस्य अनुपात्तत्वात्साधारणधर्मानुपादानाल्लुप्तैकदेशत्वमपि विद्यते ।

समासावसेया पुनः संक्षेपोपमा त्रिविधा । एकद्वित्रिलोपे भावात् । एकलोपे द्विविधा, साधारणधर्मवाचिन इवादेर्वानुपादानात् । तदुक्तं **'साम्यवाचकविच्युते'रिति । 'तद्वाचिविरहेणे'ति** च । साम्यवाचकः साधारणधर्मवाची । ( साधारणधर्मः ) सौन्दर्यादिः । तद्वाची उपमानोपमेयभाववाची च इवादिः । अत्र च सर्वत्र प्रकरणे 'संक्षेपाभिहिताप्येषा' इति, 'क्वचित् समास' इति, 'निबध्यत' इति च त्रयं प्रत्येकं यथोपयोगमनुषज्यते ।

तत्र साम्यवाचिवियोगेन समासे या संक्षेपोपमा तस्याः पूर्वमेवोदाहरणमुक्तं 'पूर्णेन्दुबिम्बप्रतिममि'ति । अत्र ह्यसितोदरत्वमर्थसामर्थ्यावसेयत्वाच्छब्देन नोपात्तम् ॥ इवादिवियोगे तु तस्या उदाहरणम्—

इति काले कलोल्लापिकादम्बकुलसङ्कुले ।
त्रिदशाधीशशार्दूलः पश्चात्तापेन धूर्जटिः ॥
तां शशिच्छायवदनां नीलोत्पलदलेक्षणाम् ।
सरोजकर्णिकागौरीं गौरीं प्रति मनो दधौ ॥

कादम्बाः पक्षिभेदाः । सरोजकर्णिकागौरीं गौरीमित्यत्र सरोजकर्णिका उपमानं, गौरी उपमेया, गौरत्वं साधारणो धर्मः । तच्च त्रयं स्वकण्ठेनो-

पात्तम् । इवाद्यर्थस्तु उपमानस्य साधारणधर्मवाचिना सह "उपमानानि सामान्यवचनैः" ( पा. अ. २।१।५५ ) इति यः समासस्तत्सामर्थ्यादवगम्यते । तेनेयमिवादिशब्दलोपाल्लुप्तैकदेशा । एवमेकलोपे सति द्विविधा समासोपमोक्ता ।

द्वितयलोपे त्वेकप्रकारा भवति, साधारणधर्मवाचिन इवादेश्च युगपदप्रयोगात् । तदुक्तं **'उपमानोपमेयोक्तौ साम्यतद्वाचिविच्यवात्'** । अत्र साम्यशब्देन साम्यवाची शब्दो लक्ष्यते । साम्यविच्यवाच्चोपमाया असंभवात् । तस्या उदाहरणं 'त्रिदशाधीशशार्दूल' इति, नीलोत्पलदलेक्षणाम्' इति च । 'त्रिदशाधीशशार्दूलः' इत्यत्र च त्रिदशाधीश उपमेयः, शार्दूल उपमानम् । तच्च द्वयं स्वकण्ठेनोपात्तम् । इवाद्यर्थः साधारणश्च धर्मस्तेजस्वित्वादिः सामर्थ्यादवसीयते । 'नीलोत्पलदलेक्षणाम्' इत्यत्र तु नीलोत्पलपलाशानामुपमानत्वं, ईक्षणयोरुपमेयता । एतयोश्च स्वकण्ठेनोपादानम् । नीलत्वदीर्घत्वादिसाधारणो धर्म इवाद्यर्थश्च उपमानोपमेयभावात्मकः स्वशब्देन अनुपात्तोऽपि समासवशेनार्थसामर्थ्यादवसीयते । 'त्रिदशाधीशशार्दूल' इत्यस्मात्तु 'नीलोत्पलदलेक्षणामि'त्यस्य बहुव्रीहित्वकृतो विशेषः । तत्र हि "उपमितं व्याघ्रादिभिः" इति तत्पुरुषो विहितः । एवमेषा साधारणधर्मवाचिन इवादेश्चाप्रयोगात् द्वितयलोपे समासे संक्षेपोपमोक्ता ।

त्रितयलोपे तु साधारणधर्मवाचिन उपमेयाभिधायिन उपमानोपमेयभाववाचिनश्च इवादेर्युगपदप्रयोगात्समासवर्त्तिनी संक्षेपोपमा भवति । तदुक्तं **"साम्योपमेयतद्वाचिवियोगाच्च"** इति । अत्रापि पूर्ववत्साम्योपमेयशब्दाभ्यां तद्वाची शब्दो लक्ष्यते । तस्या उदाहरणं "शशिच्छायवदनामि"ति । अत्र हि शशिच्छायातुल्या छाया यस्य तथाविधं वदनं यस्या इति बहुव्रीहिगर्भे बहुव्रीहौ शशिकान्तिरुपमानं, वदनकान्तिरुपमेया । तयोश्च साधारणो धर्म आह्लादकत्वादिस्तुल्यत्वं चेति चतुष्टयमवगम्यते । शब्दस्पृष्टं तूपमानमेव शशिच्छायेति । तदितरस्योपमेयादे-

स्त्रितयस्य समाससामर्थ्येनार्थावसेयत्वात् । एवमेषा त्रितयलोपे समास-वर्तिनी संक्षेपोपमा उदाहृता । तदेवमत्र चतुःप्रकारा लुप्ता समासोपमा प्रतिपादिता । एकलोपे द्वे, द्वितयलोपे एका, त्रितयलोपे चैकेति ।

सुब्धातुप्रत्ययावसेया पुनरुपमा त्रिविधा क्यच् क्यङ् क्विप् प्रत्ययाव-सेयत्वात् । क्यच्प्रत्ययावसेयापि त्रिविधा कर्मोपमानकत्वादधिकरणो-पमानकत्वाच्च । तदुक्तं **"तथोपमानादाचारे क्यच्प्रत्ययबलोक्तितः"** इति । यथा समासे संक्षेपाभिहिता उपमा समाससामर्थ्यादवगम्यमाना निबध्यते तथा कस्मिंश्चिद्विषये उपमानात्कर्मणः अधिकरणाद्वा आचा-रार्थे यथाक्रमं सौत्र औपसंख्यानिकश्च यः क्यच्प्रत्ययस्तद्बलेन यासौ भणितिस्तत्सामर्थ्यादप्यवसीयमाना निबध्यते । तस्या उदाहरणं—

स दुःस्थीयन् कृतार्थोऽपि निःशेषैश्वर्यसंपदा ।
निकामकमनीयेऽपि नरकीयति कानने ॥

निःशेषैश्वर्यसंपदा कृतार्थोऽपीति संबन्धः । अत्र दुःस्थमिवात्मानमाचर-न्निति दुःस्थः कश्चिद्दारिद्र्याद्युपप्लुत उपमानं, भगवदात्मा उपमेयः, आचा-राख्यः साधारणो धर्मः क्यच्प्रत्ययोपात्तः । अत्र चोपमानसाधारणधर्मयोः शब्दस्पृष्टत्वं । उपमेयस्य उपमानोपमेयभावस्य च सामर्थ्यादवगतिः । तेनेयं द्वितयस्य गम्यमानार्थत्वाद्द्वितयलोपे सति सुब्धातूपमा । एवमियं कर्मोपमानिका सुब्धातूपमा उदाहृता ।

अधिकरणोपमानिका तु 'नरकीयति कानने' इति । अत्र नरक उप-मानम्, काननमुपमेयम्, क्यच्प्रत्ययोपात्तस्त्वाचारः साधारणो धर्मः । इवादयस्तु क्यच्प्रत्ययसामर्थ्येनोपमानोपमेयभावस्यावसेयत्वादप्रयुक्ताः । तेनेयं एकलोपे सति सुब्धातूपमा । एवमेषा क्यच्प्रत्ययावगम्या द्विविधा संक्षेपोपमोक्ता ।

क्यङ्प्रत्ययसामर्थ्यावगम्या तु कर्त्रुपमानिका संक्षेपोपमा भवति । तदाह-**"कर्तुराचारे क्यङा से"ति, "तथे"ति, "उपमानादाचार"** इति । क्वचिदिति च पूर्वोक्तस्यात्रानुषङ्गः । कर्तुरुपमानादुत्तरेणाचारविषयेण क्यङा

सा संक्षेपोपमा क्वचिन्निबध्यत इत्यर्थः । तस्या उदाहरणम्—

> कृशानुवज्जगत्तस्य पश्यतस्तां प्रियां विना ।
> खद्योतायितुमारब्धं तत्त्वज्ञानमहामहः ॥

खद्योतो ज्योतिर्मालिका। अत्र खद्योतायितुमित्यादौ खद्योत उपमानम्। तत्त्वज्ञानं पदार्थस्वरूपयाथातथ्यपरिच्छेदः, तदात्मकं यत्तन्महदुत्कृष्टं महस्तेजस्तदुपमेयम् । क्यङ्प्रत्ययोपात्तश्चाचारः साधारणो धर्मः । क्यङ्-प्रत्ययसामर्थ्यावसेयत्वाच्चात्रेवादेरप्रयोगः । तेनेयमेकलोपेन सुब्धातूपमोपनिबद्धा ।

क्वचित्तु विषये कर्त्रुपमानिका सा संक्षेपोपमा क्विपा निबध्यते । स च क्विप् "सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः" इत्यनेन विधीयते । तदुक्तं **"सा क्विपा क्वचिदि"ति** । अत्रापि तथेति, उपमानादाचार इति, कर्तुरिति च त्रयमनुषज्यते । तस्या उदाहरणम्—"कृशानुवज्जगदि' ति । कृशानुशब्दादाचारक्विबन्ताच्छतरि रूपम् । अत्र कृशानुरुपमानम्, जगदुपमेयम्, आचारश्च साधारणो धर्मः क्विप्सामर्थ्यादवगम्यते । अत्र चोपमानोपमेययोः शब्दोपात्तत्त्वादिवादीनामाचारस्य च अर्थसामर्थ्यावसेयत्वात्तद्द्वितयलोपः । न खल्वश्रूयमाणस्य क्विपोऽर्थाभिधायिता वक्तुं शक्या । एवमेषा सुब्धात्ववसेया त्रिविधा संक्षेपोपमा प्रतिपादिता । क्यच्क्यङ्क्विप्प्रत्ययावसेयत्वात् । क्यच्प्रत्ययसामर्थ्यावसेया तु द्विविधा । कर्माधिकरणोपमानकत्वात् । क्यङ्प्रत्ययावसेया त्वेकप्रकारा । क्विप्प्रत्ययावसेयाप्येकप्रकारैव भवति । तदेवमेषा चतुर्विधा सुब्धातुप्रत्ययावसेया संक्षेपोपमोक्ता ।

कृत्प्रत्ययसामर्थ्यावसेया संक्षेपोपमा द्विविधा, कर्मोपमानिका कर्त्रुपमानिका च । तदुक्तं **'उपमाने कर्मणि वा कर्तरि वा यो णमुल्कषादिगतस्तद्वाच्या से'**ति । कषादिगतः कषाद्यनुप्रयोगक इत्यर्थः । कर्मोपमानिकायास्तस्या उदाहरणम्—

> तस्येतरमनोदाहमदहत्प्रज्वलन्मनः ।
> उमां प्रति तपःशक्त्याकृष्टबुद्धेः सरानलः ॥

अत्र इतरस्य प्राकृतस्य संबन्धि मन उपमानं, भगवन्मन उपमेयं, दह्यमानत्वं साधारणो धर्मः। तच्च त्रयं शब्दस्पृष्टम्। उपमानोपमेयभावस्त्वत्र णमुल्सामर्थ्यादिवादीनामप्रयोगेऽपि गम्यते। तेनेयमेकलोपे संक्षेपोपमा कर्मोपमानिका कृत्प्रत्ययावसेया।

कर्त्रुपमानिकायास्तु तस्या उदाहरणम्—

> स दग्धविग्रहेणापि वीर्यमात्रस्थितात्मना।
> स्पृष्टः कामेन सामान्यप्राणिचिन्तमचिन्तयत्॥

विग्रहः शरीरम्। अत्र सामान्यभूतः प्राणी गुणातिशयशून्य उपमानं, तच्छब्दनिर्दिष्टश्च भगवानुपमेयः, चिन्तयितृत्वं साधारणो धर्मो, णमुल्सामर्थ्याच्च इवादेरप्रयोगेऽप्युपमानोपमेयभावावसायः। तेनेयमेकलोपे सति कर्त्रुपमानिका संक्षेपोपमा कृत्प्रत्ययावसेया। एवमेषा कृत्प्रत्ययावसेया संक्षेपोपमा द्विविधा प्रतिपादिता।

या तु तद्धितसामर्थ्यावसेया वतिशब्दादवगम्यते, सा संपूर्णत्वात्पूर्वमुक्ता। अन्या त्वसंपूर्णा कल्पबादेः तद्धितस्य प्रयोगादवसीयते। तदुक्तं **'कल्पप्प्रभृतिभिरन्यैश्च तद्धितैः सा निबध्यते कविभिः'** इति। प्रभृतिशब्देनात्र 'इवे प्रतिकृतौ' इत्यादिविहितानां कनादीनां परिग्रहः। तस्या उदाहरणम्—

> चण्डालकल्पे कन्दर्पप्लुष्टा मयि तिरोहिते।
> संजातातुलनैराश्या किं सा शोकान्मृता भवेत्॥

अत्र चण्डाल उपमानं, मयीत्यस्मदर्थ उपमेयः, कल्पप्प्रत्ययेन च सादृश्यमुपात्तम्। प्रकृत्यर्थसदृशेऽर्थे भगवत्**कात्यायन**दृशा कल्पबादीनां विधानात्। क्रौर्यादिस्तु धर्मः स्वशब्दानुपात्तोऽपि सामर्थ्यादत्रावसीयते। तेनेयमेकलोपे सति तद्धितावगम्या संक्षेपोपमा। एवमश्वक इत्यत्रापि द्रष्टव्यम्। इवार्थोपलक्षिते सदृशे कनो विधानात्। आयःशूलिक इत्यादौ तु त्रितयलोपेन तद्धितसामर्थ्यादुपमावसायः। तथाहि, अत्रायःशूलेनान्विच्छतीति विगृह्य "अयःशूलदण्डाजिनाभ्या"मिति ठग्विधीयते। अत्र

चायःशूलमुपमानं, अर्थान्वेषणोपायः कश्चिदुपमेयः तीक्ष्णत्वादिः साधारणो धर्मः उपमानोपमेयभावश्चेति चतुष्टयमवगम्यते । तन्मध्यात्स्वशब्दस्पृष्टमुपमानमयःशूलेनेति । शिष्टशब्दस्य तु त्रितयस्यात्रार्थसामर्थ्यादवगतिः ।

ननु चात्रोपमानेनायःशूलेनार्थान्वेषणोपायस्योपमेयस्य तद्भावाध्यवसानेनापादिताभेदस्य प्रतीयमानत्वादतिशयोक्तिरियं न तूपमा । तत्कथमेतदुपमानोदाहरणम् । उच्यते । यथा 'शशिच्छायवदनाम्' इत्यत्र सत्यपि शशिच्छायाप्रच्छादितरूपत्वे वदनच्छायायाः कथञ्चिद्भेदप्रतिपत्तिपुरःसरीकारेणोपमाभेदत्वमुपन्यस्तं तथात्रापि भविष्यतीत्यदोषः । तेनायःशूलिक इत्यत्र त्रितयलोपे सति तद्धितावसेया संक्षेपोपमा भवति । एवं श्वा मुमूर्षति कूलं पिपतिषतीत्यादावपि यदि मरणपतनाद्यानुगुण्यस्य उपमेयभूतस्य तद्भावाध्यवसानात्सन्वाच्यया इच्छयोपमानभूतया समापादिताभेदस्य प्रतीयमानस्य भेदावगतिनिबन्धनं किञ्चिद्विद्यते तदोपमाभेदत्वं वाच्यम् । अन्यथा त्वतिशयोक्तिभेदतास्यावसेया । यदाह सन्विधौ भगवान्**कात्यायनः**—"आशङ्कायामचेतनेषूपसंख्यानम्"[1] "न वा तुल्यकारणत्वादिच्छाया हि प्रवृत्तित उपलब्धिरि"ति, "उपमानाद्वा सिद्धमिति" च । अत्र हि 'न वा तुल्यकारणत्वादि'त्यादिना तद्भावाध्यवसानं सूचितम् । 'उपमानाद्वा सिद्धमि'ति तूपमानोपमेयभावः प्रतिपादितः । इयं च धातोः सनो विधानात्तदन्तस्य च धातुत्वात्सुब्धातूपमावत् धातुधातूपमावसेया । एवं वर्तमानसामीप्यादावप्युपमाभेदत्वमतिशयोक्तिभेदत्वं वा यथाप्रतीति योज्यम् । **चूर्णिकारस्य** त्वेवमादौ तद्भावाध्यवसानसमाश्रयेण नातिशयोक्तिभेदत्वमेवेष्टम् । यदाह— "न तिङन्तेनोपमानमस्ती"ति । अत एव **दण्डिना** "लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः । असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता" इत्यादेर्गर्भीकृतातिशयोत्प्रेक्षाभेदत्वमेव महता प्रपञ्चेनाभ्यधायि । तेन कदा

---

१ "धातोः कर्मण०" इत्यादि सूत्रभाष्ये स्पष्टानि एतानि त्रीणि वार्तिकानि । महाभाष्ये अ. ३ पा. १ आ. १

देवदत्त ग्रामं गमिष्यसि, एष गच्छामीत्यादावपि वर्तमानसामीप्ये वर्तमानरूपतया भविष्यत्कालस्याध्यवसानादतिशयोक्तिभेदत्वमेव वाच्यम् । एवमन्यत्राप्यूह्यम् । एवमेषा वाक्यसमाससुब्धातुकृत्तद्धितावसेया संक्षेपोपमा पञ्चविधा प्रतिपादिता ।

संपूर्णा तु वाक्यसमासतद्धितभेदेन त्रिविधा पूर्वमुक्ता । आसामेव चावान्तरभेदा अन्ये निर्दिष्टाः । तथाहि, संपूर्णयोर्वाक्यतद्धितोपमयोः श्रौतत्वार्थत्वभेदेन प्रत्येकं द्वैविध्यमुक्तम् । संक्षेपोपमायाश्च समासोपमाया एकद्वयत्रयलोपेन चतुर्विधत्वम् । एकलोपस्य हि तत्र द्वैविध्यमुक्तम्, इवादेः साधारणधर्मवाचिनश्च लोपात् सुब्धातूपमायाश्चतुर्विधत्वम्, क्यच्क्यङ्क्विप्प्रत्ययावसेयत्वात् । क्यच्प्रत्ययावसेया हि कर्माधिकरणोपमानकत्वेन द्विविधोक्ता । कृत्प्रत्ययावसेयायाश्च कर्तृकर्मोपमानकत्वेन द्विविधत्वम् । तदेवमेषा सप्तदशविधा ग्रन्थकृता उपमा प्रतिपादिता । तदाहुः—

**कृत्तद्धितसमासेभ्यः सुब्धातोरथ वाक्यतः ।**
**पूर्णा लुप्तैकदेशा च गम्यते द्विविधोपमा ॥**
**एकद्वयत्रयाणां च लोपात्स्याल्लोपिनी त्रिधा ।**
**पूर्वौ भेदौ द्विधा चात्र तृतीयस्त्वेकरूपकः ॥** इति

पूर्वौ भेदौ द्विधा चात्रेति साधारणधर्मवाचिलोपाच्चैकलोपस्य द्वैविध्यम् । द्वितयलोपोऽपि साधारणधर्मवाचीवादिवियोगात्तथा उपमेयवाचीवादिवियोगाद्द्विविधः । एषा चोपमा विचित्रभेदत्वे सत्यपि यत्रैव चेतोहारित्वमस्ति तत्रैवालङ्कारतां प्रतिपद्यते न सर्वत्रेत्युक्तम् ॥

प्रतिवस्तूपमा—

**उपमानसंनिधाने च साम्यवाच्युच्यते बुधैर्यत्र ।**
**उपमेयस्य च कविभिः सा प्रतिवस्तूपमा गदिता ॥**

यत्रोपमानोपमेययोः संनिधाने साम्यवाचिनः पदस्यासकृदुपादानं क्रियते सा प्रतिवस्तूपमा । ननु यदि साम्यवाचिनः पदस्य तत्रासकृदुपादानं क्रियते ततोऽनेकवाक्यत्वमापतति । न चानेकस्मिन् वाक्ये इवादीनि

प्रयुज्यन्ते, एकवाक्यनिष्ठतया तेषामभिधासामर्थ्यावसितत्वात् । अतश्चे-वादीनामप्रयोगे कृथं तत्रोपमानोपमेयभावावसाय इत्याशङ्क्याह—

**प्राकरणिकेतरत्वस्थित्यैकश्चोपमेयतां लभते ।**
**उपमानत्वं चापर इत्युपमावाचिशून्यत्वम् ॥**

नानार्थावाक्यत्वादिवादीनामप्रयोगेऽपि प्राकरणिकत्वाप्राकरणिकत्वपर्यालो-चनया अर्थसामर्थ्यादत्रोपमानोपमेयभावोऽवसीयत इत्यर्थः ।

तदाहुः—

**इवादेरप्रतीतापि शब्दसंस्कारतः क्वचित् ।**
**उपमा लक्ष्यतेऽन्यत्र केवलार्थनिबन्धना ॥ इति**

इह प्रकारत्रयेण उपमायाः प्रतिपत्तिः । क्वचिदिवादिशब्दसामर्थ्यादु-पमा वाच्यभूता प्रतीयते, यथा चन्द्र इव मुखमस्या इत्यादौ । क्वचित्तु तत्तद्विशिष्टसंस्कारसहायाच्छब्दात्स्वार्थाभिधानमुखेन लक्ष्यमाणायास्तस्याः प्र-तिपत्तिः, यथा शस्त्रीश्यामेति । अत्र हि समासनिबन्धनैकपद्यादिसंस्का-रसहिताभ्यां शस्त्रीश्यामाशब्दाभ्यां स्वार्थाभिधानव्यवधानेन लक्ष्यमाणोपमा गम्यते । क्वचित्तूपमानोपमेयनिबन्धनशब्दसंस्काराभावेऽपि केवलादेवार्थ-सामर्थ्यात्तस्याः प्रतिपत्तिः, यथा रूपकदीपकप्रतिवस्तूपमादिष्वित्यर्थः । अतश्चास्यां प्रतिवस्तूपमायां केवलेनैवार्थसामर्थ्येनोपमानोपमेयत्वमवगम्यते इत्यदोषः ।

तस्या उदाहरणम्—

विरलास्तादृशो लोके शीलसौन्दर्यसंपदः ।
निशाः कियत्यो वर्षेऽपि यास्विन्दुः पूर्णमण्डलः ॥

विरलाः स्वल्पाः । तादृशः पार्वतीवर्त्तिन्यो याः शीलसौन्दर्यसंपदः तत्सदृश्यः । शीलं सुस्वभावता । सौन्दर्यं लावण्यम् । अत्र संवत्सरमध्य-वर्तिन्योऽखण्डशशिबिम्बा रात्रयो द्वादश उपमानम् । शीलसौन्दर्ययोः संभाराः सकललोकोत्कृष्टाः कतिपयजनजुष उपमेयाः । साधारणश्च धर्मो विरलत्वम् । तच्चोपमानसंनिधाने कियत्य इत्युपात्तम् । उपमेयसंनिधाने तु

अदर्शनमनुपादानम् । तत्र द्वितीयस्य भेदस्योदाहरणम्—

महर्द्धिनि गृहे जन्म रूपं स्मरसुहृद्वयः ।
तथापि न सुखप्राप्तिः कस्य चित्रीयते न धीः ॥

अत्र धनसंभारयोगः सुरूपत्वं यौवनं चेति यान्येतानि सुखप्राप्तौ कारणान्यविकलानि तत्सद्भावेऽपि क्रियाफलभूतायाः सुखप्राप्तेरनुत्पत्तिरुपनिबद्धा । पूर्वोक्तानां सुखहेतूनां विस्मयविभावनात्मकविशेषख्यापनाय । अत्र च निमित्तं स्वकण्ठेनानुपात्तमप्यर्थसामर्थ्यादवगम्यते । विधिवैधुर्यादिरूपशब्दोऽत्र शरीरस्य रूपमात्राव्यभिचारित्वाद्रूपप्रकर्षतात्पर्येणोपात्तः । स्मरसुहृद्वयो यौवनम् । यौवने हि मन्मथाभिमुखीभवति । आद्यभेदोदाहरणं तु—

इत्थं विसंष्ठुलं दृष्ट्वा तावकीनं विचेष्टितम् ।
नोदेति किमपि प्रष्टु सत्वरस्यापि मे वचः ॥

अत्र प्रश्नत्वरालक्षणकारणसद्भावेऽपि प्रश्नवचसोऽनुत्पत्तिरुपनिबद्धा । तया च प्रश्नवचनकारणस्य विस्मयविभावनाख्यो विशेषोऽवगम्यते । अत्र च निमित्तं भगवतीगतिविसंष्ठुलचेष्टितदर्शनं स्वकण्ठेनोपात्तम् ॥

विरोधः—

**गुणस्य वा क्रियाया वा विरुद्धान्यक्रियावचः ।**
**यद्विशेषाभिधानाय विरोधं तं प्रचक्षते ॥**

यत्र कविना गुणस्य वा क्रियाया वा अथवा द्विर्वाशब्दस्योपात्तत्वात् द्रव्यस्य विरुद्धोऽन्यः पदार्थः सजातीयो विजातीयो वा वचसा स्वप्रतिभाप्रसूतेन वर्णनिकात्मना क्रियते कश्चिद्विशेषमवगमयितुं स विरोधाख्योऽलङ्कारः । गुणक्रियाद्रव्याणामुत्प्रेक्षालङ्कारलक्षणव्याख्यानसमये स्वरूपमुक्तम् । क्रिया कारणमुत्पादनं, तत्प्रधानं वचः क्रियावचः । कविप्रतिभया खलु पुराणप्रजापतिनिर्मितशुष्कपरुषपदार्थविलक्षणाः सरसाः पदार्थाः अभिनवा एव निर्मीयन्ते । अतः क्रियावच इत्युक्तम् । तस्योदाहरणम्—

यद्वा मां किं करोम्येष वाचालयति विस्मयः ।
भवत्याः क्वायमाकारः क्वेदं तपसि पाटवम् ॥

अत्र यदेतत्पूर्वमुपक्रान्तं वचो मे नोदेतीति तस्याक्षेपो यद्वेतिकृतः। किंवा करोमि विस्मयवाचालितः सन् ब्रवीमि भवत्याः केति । एष विस्मयो मां वाचालयतीति संबन्धः। अत्राकृतेः सुकुमारायाः पाटवस्य च कठिनकायसाध्यस्य विरोधो भगवतीनिष्ठत्वेनोपनिबद्धः । तेन च विस्मयविभावनाख्यो विशेषोऽत्र ख्याप्यते। अयं चासिद्धस्वभावधर्मनिष्ठत्वाद्गुणविरोधः। एवं साध्यस्वभावधर्मनिष्ठेऽपि क्रियाविरोधे उदाहार्यम्। तथा द्रव्यविरोधे गुणक्रियाविरोधे गुणद्रव्यविरोधे क्रियाद्रव्यविरोधे च ॥

तुल्ययोगिता—

**उपमानोपमेयोक्तिशून्यैरप्रस्तुतैर्वचः ।**
**साम्याभिधायि प्रस्तावभाग्भिर्वा तुल्ययोगिता ॥**

अप्रस्तुतानामेव वा यत्र साम्यमभिधीयते सा तुल्ययोगिता। अत एव प्राकरणिकाप्राकरणिकोभयार्थनिष्ठत्वाभावात्तत्रोपमानोपमेयोक्तिशून्यत्वं प्रस्तावभाग्भिः प्रस्तुतैः साम्याभिधायि वच इति संबन्धः। तस्याः पूर्वभेदस्योदाहरणम्—

त्वदङ्गमार्दवं द्रष्टुः कस्य चित्ते न भासते ।
मालतीशशभृल्लेखाकदलीनां कठोरता ॥

त्वच्छरीरसौकुमार्यदर्शिनः कस्येव चेतसि मालत्यादीनां काठिन्यं न भासत इत्यर्थः । अत्र मालत्यादीनामप्राकरणिकानामेवार्थानां कठोरत्वलक्षणं साम्यमुपनिबद्धम्। द्रष्टुरिति तृन्। तद्योगे च त्वदङ्गमार्दवमिति "न लोकाव्ययनिष्ठे"ति षष्ठीनिषेधः ।

द्वितीयभेदस्योदाहरणम्—

योगपट्टो जटाजालं तारवीत्वङ्मृगाजिनम् ।
उचितानि तवाङ्गस्य यद्यमूनि तदुच्यताम् ॥

अत्र प्राकरणिकानामपि योगपट्टादीनां भगवतीशरीरे संस्पर्शानौचित्यलक्षणः समानो धर्मो निबद्धः। तारवीत्वक् वल्कलम्। अङ्गस्य शरीरस्य।

अप्रस्तुतप्रशंसा—

**अधिकारादपेतस्य वस्तुनोऽन्यस्य या स्तुतिः ।**
**अप्रस्तुतप्रशंसेयं प्रस्तुतार्थानुबन्धिनी ॥**

अधिकारादुपवर्णनावसरादपगतस्य प्राकरणिकादपरस्य वस्तुनो यत्रोपनिबन्धः सा अप्रस्तुतप्रशंसा । न चैवमपि तस्या उन्मत्तप्रलापप्रख्यता, यतः सा केनचित्स्वाजन्येन प्रस्तुतमर्थमनुबध्नाति । तदुक्तम्—**प्रस्तुतार्थानुबन्धिनीति** । तस्या उदाहरणम्—

यान्ति स्वदेहेषु जरामसंप्राप्तोपभोक्तृकाः ।
फलपुष्पर्द्धिभाजोऽपि दुर्गदेशवनश्रियः ॥

अत्र कृच्छ्रेण गन्तुं शक्यते यस्मिन्देशे तद्गतकाननानां शोभा अप्राकरणिक्य एव स्वदेहजर्जरतयोपवर्णिताः । ताभिश्च सादृश्यं स्वाजन्येन भगवतीचेष्टितमुपमेयभूतं एवंविधरूपतयावगम्यते । दुर्गेति "सुदुरोरधिकरण" इति डप्रत्ययः ॥

व्याजस्तुतिः—

**शब्दशक्तिस्वभावेन यत्र निन्देव गम्यते ।**
**वस्तुतस्तु स्तुतिश्श्रेष्टा व्याजस्तुतिरसौ मता ॥**

यत्र शब्दानामभिधायकानां या शक्तिरर्थप्रत्यायनौत्सुक्यं तस्या यः स्वभावो नियतार्थनिष्ठत्वात्मकस्तेन निन्दा गम्यते इव नत्वसौ निन्दैव । पदार्थपर्यालोचनसामर्थ्योत्थायां स्तुतौ वाक्यार्थीभूतायामवान्तरवाक्यार्थत्वात् । अत एवाह—**वस्तुतस्तु स्तुतिश्श्रेष्टेति** । वस्तुत इत्यर्थसामर्थ्यादित्यर्थः । तत्र व्याजस्तुतिर्नामालङ्कारो भवति । निन्दाव्याजेन हि सा स्तुतिः । अतो व्याजस्तुतिः । तस्या उदाहरणम्—

धिगनन्योपमामेतां तावकीं रूपसंपदम् ।
त्रैलोक्येऽप्यनुरूपो यद्वरस्तव न लभ्यते ॥

अत्र यदेतद्धिग्वादोपहतत्वं रूपसंपदः साक्षाच्छब्दव्यापारेण स्पृष्टं न

तत्स्वात्मपर्यवसितं, अर्थसामर्थ्योत्थलोकोत्तरभगवतीरूपोत्कर्षप्रतिपादनपर्यवसितत्वात् । अतस्तस्यावान्तरवाक्यार्थता । तेनेयं व्याजस्तुतिः । निन्दाव्याजेन रूपोत्कर्षस्य स्तूयमानत्वात् । धिगनन्योपमामि "त्युभसर्वतसोः कार्ये" ति द्वितीया ॥

विदर्शना—

**अभवन्वस्तुसंबन्धो भवन्वा यत्र कल्पयेत् ।**
**उपमानोपमेयत्वं कथ्यते सा विदर्शना ॥**

यत्र पदार्थानां संबन्धः स्वयमनुपपद्यमानः सन्नुपमानोपमेयभावे पर्यवस्यति अथवा उपमानोपमेयभावकल्पनया स्वात्मानमुपपादयति तत्र विदर्शना, विशिष्टस्यार्थस्य उपमानोपमेयभावात्मकस्योपदर्शनात् । तस्या उदाहरणम्—

विनोचितेन पत्या च रूपवत्यपि कामिनी ।
विधुवन्ध्यविभावर्याः प्रबिभर्ति विशोभताम् ॥

विधुश्चन्द्रः । विभावरी रात्रिः। अत्र रजनिकररहितविभावरीविशोभत्वस्य यदेतत्कर्मत्वं तत्कामिनीकर्तृकायां भरणक्रियायां न समन्वयं गच्छति । न ह्यन्यस्य संबन्धिनीं विशोभामन्यो बिभर्ति । अतः पदार्थसमन्वयंस्यात्रानुपपत्तिः । उपमानोपमेयभावस्त्वत्र वाक्यार्थविश्रान्तिस्थानं कृष्णरात्रिवद्विशोभतां बिभर्तीति । एवमेतद्भवति वस्त्वसंबन्धे उपमानोपमेयभावकल्पनायामुदाहरणम् । यत्र तु पदार्थसमन्वय उपमानोपमेयभावकल्पनया स्वात्मानमुपपादयति तस्य विदर्शनाभेदस्योदाहरणमुद्भटपुस्तके न दृश्यते । तस्य तु भामहोदितमिदमुदाहरणम्—

अयं मन्दद्युतिर्भास्वानस्तं प्रति यियासति ।
उदयः पतनायेति श्रीमतो बोधयन्नरान् ॥ इति

तत्र प्रथमोदयसमयविजृम्भमाणस्वकान्तिरहितस्य भास्वतो यदेतदस्तमयौन्मुख्यं तदुपेतस्य श्रीमतः प्रयोज्यकर्तॄन् प्रति पातावसानोदयकर्मकेऽवबोधे तत्समर्थाचरणलक्षणं हेतुकर्तृत्वमुपनिबद्धम् । तथाविधं खलु भास्वन्तं

पश्यन्तः श्रीमन्तो बुध्यन्ते भास्वत इव सर्वस्योदयः पातावसान इति। तांश्चासौ तथावबुध्यमानान् स्वावस्थोपदर्शनेन प्रयुङ्क्ते यथा ममायमुदयः पातावसानस्तथा भवतामपीति। अत्र च प्रेषणाध्येषणयोरभावात्तत्समर्थाचरणलक्षण एव प्रयोजकव्यापारः कारीषोऽध्यापयति भिक्षा वासयतीति यथा। तेन च प्रयोज्यप्रयोजकभावेन स्वात्मानमुपपादयितुमुपमानोपमेयभाव आक्षिप्तः हे श्रीमन्तो यथा ममायमुदयः पतनाय तद्वद्भवतामपीति यूयं बुध्यध्वमिति। तेनात्र प्रयोज्यप्रयोजकभावलक्षणेन पदार्थसमन्वयेन स्वात्मोपपादनायोपमानोपमेयभावस्याक्षेपात् द्वितीयो विदर्शनाया भेदः॥

संकरः—

स च चतुर्विधः संदेहशब्दार्थवर्त्यलङ्कारैकशब्दाभिधानानुग्राह्यानुग्राहकभेदेन। तत्र संदेहसंकरस्तावत्—

**अनेकालङ्क्रियोल्लेखे समं तद्वृत्त्यसंभवे।**
**एकस्य च ग्रहे न्यायदोषाभावे च संकरः॥**

अनेकस्यालङ्कारस्योल्लेखे चेतस्युपारोहे संदेहसंकरो भवति, न त्वेकशब्दाभिधानसंकरादावपि अनेकालङ्कारोल्लेखः संभवति। यथा—

मुरारिनिर्गता नूनं नरकप्रतिपन्थिनी।
तवापि मूर्ध्नि गङ्गेव चक्रधारा पतिष्यति॥

अत्र ह्युपमानोपमेयभावस्तत्प्रतिभाहेतुश्च श्लेषोऽनेकालङ्कार उल्लिख्यते। उपमानोपमेयभावे तावत् गङ्गोपमानम्। चक्रधारा उपमेया। मुरारिनिर्गतत्वं साधारणो धर्मः। श्लेषस्त्वत्र नरकप्रतिपन्थिशब्दादात्मानं लभते। एकत्र हि नरको दानवः। अपरत्र त्ववीच्यादिः। एतौ च द्वावलङ्कारावेकस्मिन्निवशब्देऽनुप्रविशतः। न ह्युपमानोपमेयभावस्तत्प्रतिभाहेतुर्वा श्लेषः समासाद्यभावे इवशब्दादिमन्तरेण स्वरूपं प्रतिलभते। तेनात्र द्वावलङ्कारावेकस्मिन्वाचके इव शब्देऽनुप्रविष्टौ। यदि चानेकालङ्कारोल्लेखे सति संदेहसंकरस्तत एवमादावप्यनेकालङ्कारोल्लेखस्य संभवात्संदेहसंकरप्रसङ्ग इत्याशङ्क्योक्तम्—**समं तद्वृत्त्यसंभव इति**। तस्यानेकस्यालङ्कारस्य समं युगप-

यदि वृत्तिर्व्यापारोऽलङ्कार्यालङ्करणात्मको न संभवतीत्यर्थः । पूर्वोक्ते तूदाहरणे मुरारिनिर्गतेति साधारणधर्मोपादानान्नरकप्रतिपन्थिनीति च श्लेषपदोपदर्शनान्नानेकस्यालङ्कारस्य युगपद्वृत्तेरसंभवः । तेन तत्र न संदेहसंकरता ।

ननु यद्यनेकालङ्कारोल्लेखे युगपद्वृत्त्यसंभवे च संदेहसंकरत्वम् । एवं सति यत्र प्रतिभामात्रेणानेकस्मिन्नलङ्कारे उल्लिख्यमाने यस्य साधकं प्रमाणमस्ति स उपादीयते । यस्य तु बाधकं प्रमाणं विद्यते स त्यज्यते । तत्राप्यनेकालङ्कारोल्लेखस्य समं तद्वृत्त्यसंभवस्य च संभवात्संदेहसंकरत्वं प्रसज्जतीत्याशङ्क्योक्तम्—**एकस्य च ग्रहे न्यायदोषाभावे चेति** । न्यायः साधकं प्रमाणम् । दोषो बाधकं प्रमाणम् । यत्रानेकालङ्कारोल्लेखे युगपद्वृत्त्यसंभवे च एकतरस्य ग्रहणे साधकबाधके प्रमाणे समस्तव्यस्ततया न विद्येते तत्र संदेहसंकरः । तेन नानिष्टप्रसङ्गः । तथाहि—यत्र साधकबाधके प्रमाणे सामस्त्येन विद्येते तत्र यस्य साधकं प्रमाणमस्ति तस्योपादानाद्बाधकस्य प्रमाणोपेतस्य च त्यागादेकस्य ग्रहणं भवति । यत्रापि साधकबाधकप्रमाणयोर्वैयस्त्येनान्यतरस्य विद्यमानता तत्रापि प्रतिभोल्लिख्यमानानेकालङ्कारमध्यात्साधकप्रमाणोपेतस्योपादानात्प्रमाणशून्यस्य चोपेक्ष्यत्वात्, तथा बाधकप्रमाणोपेतस्य परित्यागात्तदितरस्य च पूर्वोल्लिखितस्य पारिशेष्येणोपादानादेकस्य ग्रहो भवति । यत्र तु साधकबाधकप्रमाणाभावस्तत्र संदेह एव । एवमयं संदेहसंकरो लक्षितः । तस्योदाहरणम्—

यद्यप्यत्यन्तमुचितो वरेन्दुस्ते न लभ्यते ।
तथापि वच्मि कुत्रापि क्रियतामादरो नरे ॥

अत्र वरेन्दुरिति वर एव इन्दुः, वर इन्दुरिवेति रूपकसमासोपमयोर्द्वयोरलङ्कारयोरुल्लेखः । न च तस्यानेकस्यालङ्कारस्य युगपद्वृत्तिः संभवति । एकालङ्कारसंश्रयेणैवालङ्कारस्य कृतकृत्यत्वात् । न चात्र द्वयोर्मध्यादेकतरस्य ग्रहणाय साधकबाधकप्रमाणयोगः । साधकं हि प्रमाणं विद्यमानं विधिमुखेनालङ्कारं ज्ञापयेत् । तथा बाधकमपि प्रहातव्यालङ्कारनिषेधमुखेनोपादेयमलङ्कारं पूर्वोल्लिखितं पारिशेष्यादुपादेयतया प्रतिपादयति । अत्र तु द्वयोः साधकबाधकप्रमाणयोरभावात्संदेहः । तेन संकरोऽलङ्कारः ।

शब्दार्थवर्त्यलङ्कारस्तु—

**शब्दार्थवर्त्यलङ्कारा वाक्य एकत्र भासिनः ।**
**संकरो वा**

यत्रैकस्मिन्वाक्ये शब्दवर्तिनोऽर्थवर्तिनश्चालङ्काराः संसर्गमुपयान्ति स शब्दार्थालङ्कारः । तस्योदाहरणम्—

इत्थं स्थितिर्वरार्थी चेन्मा कृथा व्यर्थमर्थिताम् ।
रूपेण ते युवा सर्वः पादबद्धो हि किङ्करः ॥

वरार्थी भर्त्रर्थी । किङ्करो दासः । अत्र थकारोपनिबद्धोऽनुप्रासात्मकः शब्दालङ्कारः । अर्थालङ्कारश्चार्थान्तरन्यासो विद्यते । तथाहि—अत्र माकृथा व्यर्थमर्थितामित्युपादित्सितेऽर्थेऽर्थित्वस्याकरणं यदुपनिबद्धं तदनुपपद्यमानतया संभाव्य तत्समर्थनायोक्तं 'रूपेण ते युवा सर्वः पादबद्धो हि किङ्कर' इति । यो गुणोत्कर्षशाली स नार्थयते, अपित्वर्थ्यते यथा रत्नादि । त्वं च रूपवत्त्वाद्गुणोत्कर्षशालिनी । तस्मादुपादित्सितेऽर्थे तवार्थित्वमयुक्तमिति । तेनायं शब्दार्थवर्त्यलङ्कारसंकरः ॥

एकशब्दाभिधानसंकरस्तु—

**एकवाक्यांशप्रवेशाद्वाभिधीयते ।**

एकस्मिन्वाक्यांशे वाक्यैकदेशे यत्रानेकस्यालङ्कारस्यानुप्रवेशः स एकशब्दाभिधानसंकरः । तस्योदाहरणम्—

मैवमेवास्त्व सच्छायवर्णिका चारुकर्णिका ।
अम्भोजिनीव चित्रस्था दृष्टिमात्रसुखप्रदा ॥

अत्रोपमालङ्कार उपमाप्रतिभोत्पत्तिहेतुभूतश्च श्लेष इत्येतौ द्वावलङ्कारावेकस्मिन्वाक्यांशे इवशब्देऽनुप्रविष्टौ । तथाहि—अम्भोजिनी उपमानम्, गौरी उपमेया, दृष्टिमात्रसुखप्रदत्वं साधारणो धर्मः इत्युपमा । सच्छायवर्णिका चारुकर्णिकेति श्लेषः । अम्भोजिन्यां हि वर्णा राजवर्तादयः गौर्यां तु गौरत्वम् । अम्भोजिन्यां कर्णिका कमलमध्यवर्त्तिबीजकोशः । गौर्यां तु

चारू कर्णौ । कप्चात्र समासान्तः । तेनायं श्लेषः । एतौ च द्वावलङ्कारावेकस्मिन्वाक्यांशे इवशब्देऽनुप्रविष्टौ । तेनायमेकशब्दाभिधानसंकरः ॥

अनुग्राह्यानुग्राहकसंकरस्तु—

**परस्परोपकारेण यत्रालङ्कृतयः स्थिताः ।**
**स्वातन्त्र्येणात्मलाभं नो लभन्ते सोऽपि संकरः ॥**

यत्रोपकार्योपकारकभावावस्थितत्वादलङ्काराः स्वातन्त्र्येणात्मानं न लभन्ते सोऽनुग्राह्यानुग्राहकसंकरः । उपकार्योऽप्युपकारकमुपकरोति । तदीयस्योपकारस्य विषयभावेनावस्थानात् । उपकार्ये ह्युपकारकाधेयमुपकारं प्रतीत्सति सत्युपकारकस्योपकारकत्वं भवति । तेनोपकार्येणाप्युपकारकस्योपकारः क्रियत इति परस्परग्रहणमत्रोपात्तम्—**परस्परोपकारेणेति** । तस्योदाहरणम्—

हरेणेव स्मरव्याधस्त्वयानङ्गीकृतोऽपि सन् ।
त्वद्वपुः क्षणमप्येष धार्ष्ट्यादिव न मुञ्चति ॥

अत्र धार्ष्ट्यादिव न मुञ्चतीति या असावुत्प्रेक्षा सा हरेणेव स्मरव्याधस्त्वयानङ्गीकृतोऽपि सन् इत्युपमाप्रतिभोत्पत्तिहेतुश्लेषवशेन स्वरूपं प्रतिलभते । अनङ्गीकृतो हि अनङ्गत्वमशरीरत्वमापादितः अनूरीकृतश्च । यश्चानूरीकृतः क्षणमपि न मुञ्चति, तत्र धार्ष्ट्यं हेतुतयोत्प्रेक्षितुं शक्यते । तेन श्लेषवशेनात्रोत्प्रेक्षा आसादितस्वभावा । अतोऽयमनुग्राह्यानुग्राहकसंकरः ।

एवमयं चतुर्विधः संकरो नानालङ्कारगतविकल्पव्यवस्थासमुच्चयाङ्गाङ्गिभावसमाश्रयणेनाभिहितः । तत्रानेकालङ्कारविकल्पात्संदेहसंकरः । विभिन्नाधारत्वेन शब्दार्थवर्तिनोरलङ्कारयोरवस्थानाद्व्यवस्थासमाश्रयः शब्दार्थवर्त्यलङ्कारसंकरः । एकशब्दाभिधानसंकरे तु समुच्चयेनानेकोऽलङ्कार एकस्मिन् वाक्यांशे इवादावनुप्रविशति । अनुग्राह्यानुग्राहकसंकरे त्वनेकस्यालङ्कारस्याङ्गाङ्गिभावः । अतो विकल्पव्यवस्थासमुच्चयाङ्गाङ्गिभावसंश्रया एते चत्वारः संकरभेदाः ॥

उपमेयोपमा—

**अन्योन्यमेव यत्र स्यादुपमानोपमेयता ।**
**उपमेयोपमामाहुस्तां पक्षान्तरहानिगाम् ॥**

यत्रोभयोरुपमानोपमेययोः परस्परमुपमानोपमेयभावस्तत्रोपमेयोपमा । उपमेयेनोपमानस्योपमानात् । ननु च प्राकरणिकं साम्याभिधानसंबन्धि उपमेयं । अप्राकरणिकं उपमानं । यदि चात्रोपमेयस्योपमानत्वमभिधीयते, एवं सति तस्य प्राकरणिकत्वं व्याहन्यते इत्याशङ्क्योक्तम्—**पक्षान्तरहानिगामिति** । नात्रोपमानोपमेयभावे तात्पर्यं किन्तु एतदेव द्वयमेवंविधं विद्यते, न त्वन्यदेतयोः सदृशं वस्त्वन्तरं विद्यते इति । अतश्च एतत्पक्षद्वितयव्यतिरिक्तस्य पक्षान्तरस्यात्र हानेर्विवक्षितत्वात् परस्परमुपमानोपमेयभावो न दुष्यतीति तस्य पक्षान्तरहानौ प्रतिपाद्यायामवान्तरवाक्यार्थत्वेनावस्थानात्, वरं विषं भक्षय मा चास्य गृहे भुङ्क्थाः इतिवत् । अत्र हि विषभक्षणं न विधीयते । दुर्जनगृहे भोजनपरिवर्जनतात्पर्यात् । एवमिहाप्युपमानोपमेयभावस्याविवक्षापक्षान्तरहानौ तात्पर्यात् । तस्या उदाहरणम्—

शिरांसि पङ्कजानीव वेगोत्पातयतो द्विषाम् ।
आजौ करोपमं चक्रं यस्य चक्रोपमः करः ॥

अत्र यस्येत्युपात्तस्य त्वत्कृते सोऽपि वैकुण्ठ इत्यत्र तच्छब्दसमन्वयेनाकाङ्क्षाविच्छेदो भविष्यति । उत्तरेष्वपि च श्लोकेषु तेनैव यच्छब्दार्थो निराकाङ्क्षी कार्यः । अत्र करचक्रयोः परस्परमुपमानोपमेयभावः । साधारणश्चात्र धर्मः अतित्वरितत्वेन शत्रुशिरोऽवकर्तनम् । एष चात्रोपमानोपमेयभावः उपमानान्तराभावे पर्यवसितः । यदि परमेतयोरेव परस्परमुपमानोपमेयभावः स्यादन्यत्वे तयोरुपमानं नास्तीति ॥

सहोक्तिः—

**तुल्यकाले क्रिये यत्र वस्तुद्वयसमाश्रिते ।**
**पदेनैकेन कथ्येते सा सहोक्तिर्मता सताम् ॥**

यत्र वस्तुद्वयसमवेते द्वे क्रिये पदेनैकेन तन्त्रवृत्त्या कथ्येते तत्र सहोक्तिर्नामालङ्कारो भवति। ननु 'संजहार शरत्कालः' इत्यादावपि दीपके पदेनैकेन वस्तुद्वयसमवेते द्वे क्रिये कथ्येते। अतश्च तत्रापि सहोक्तित्वं प्राप्नोतीति आशङ्क्योक्तम्–**तुल्यकाले इति**। यत्र सहादिना पदेन तुल्यकालतामवगम्य वस्तुद्वितयसमाश्रिते द्वे क्रिये कथ्येते तत्र सहोक्तित्वम्। न चैवं दीपक इति नातिव्याप्तिः। सहादिना च शब्देन युगपत्कालतायामवद्योत्यमानायां द्वयी गतिः। कदाचित्खलु ययोः क्रिययोस्तुल्यकालता ते क्रिये तुल्यकक्षतया स्वाश्रयविश्रान्तत्वेनाभिधीयेते, यथा देवदत्तयज्ञदत्तौ सह भुञ्जाते इति। कदाचित्त्वेकाश्रयविश्रान्तायां क्रियायामभिहितायां सहाद्यर्थपर्यालोचनासामर्थ्यादपरस्याश्रयस्य क्रियासंबन्धोऽवगम्यते, यथा देवदत्तो यज्ञदत्तेन सह भुङ्क्ते इति। तत्रेह द्वितीया गतिराश्रीयते। शाब्देन रूपेणैकत्र क्रियासंबन्धस्य प्रतीतस्यापरत्रार्थेन रूपेणोन्नीयमानत्वेन वक्रभणिते सद्भावात्। एवंविधस्य यत्रैव शोभातिशयविधायित्वं तत्रैव सहोक्तेरलङ्कारता न सर्वत्रेति द्रष्टव्यम्। तस्या उदाहरणम्—

> द्युजनो मृत्युना सार्धं यस्याजौ तारकामये।
> चक्रे चक्राभिधानेन प्रैष्येणाप्तमनोरथः॥

यस्य प्रैष्येण इति संबन्धः। अत्र मृत्योर्द्युजनस्य च मनोरथावाप्तिकरणलक्षणे द्वे क्रिये पदेनैकेनोक्ते चक्रेऽवाप्तमनोरथ इति। यद्यप्यवाप्तमनोरथ इति चक्र इति च सुप्तिङन्तत्वभेदेन पदद्वित्वं तथापि क्रियापदद्वितयोपादानव्यावृत्तेर्विवक्षितत्वात्पदेनैकेनेति न विरुध्यते। अथवा चक्रे इति करोति क्रिया सामान्यभूता विशेषमन्तरेणापर्यवस्यन्ती मनोरथावाप्तिलक्षणं विशेषं गर्भीकरोति। अतश्चात्र सत्यप्यनेकपदत्वे एकपदीभाव इव प्रकाशते। तेन एकेन पदेनेत्युक्तम्। सार्धं शब्दश्चात्र तुल्यकालतामवद्योतयति। यस्य प्रैष्येणाज्ञाकारिणा चक्रसंज्ञकेन कर्तृभूतेन मृत्युना सार्धमपृथक्कालतया द्युजन आप्तमनोरथः कृत इति। अनेकलोककवलीकरणान्मृत्योर्मनोरथावाप्तिः, द्युजनस्य च शत्रुविनाशात्॥

परिवृत्तिः—

**समन्यूनविशिष्टैस्तु कस्यचित्परिवर्तनम् ।**
**अर्थानर्थस्वभावं यत्परिवृत्तिरभाणि सा ॥**

कस्यचिद्वस्तुनो वस्त्वन्तरेण परिवर्तनं परिवृत्तिः । सा च त्रिविधा । परिवर्तनकारकाणां परिवर्तनीयेन सह समत्वान्न्यूनत्वादधिकत्वाच्च । तदिदमुक्तम्—**समन्यूनविशिष्टैरिति** । तत्र यस्याः समोऽर्थः परिवर्त्यते तस्या अनर्थस्वभावता । अर्थशब्देन हि उपादेयोऽर्थोऽभिधीयते,ऽर्थ्यतेऽसाविति कृत्वा । यत्र च साम्यं तत्रार्थनीयत्वं नास्ति । तेनार्थ्यत्वाभावानुगमात्तत्रानर्थत्वमभिधीयते । अतस्तत्रानर्थस्वभावं परिवर्तनम् । यत्रापि च निकृष्टपरिग्रहेणोत्कृष्टपरित्यागः क्रियते, तत्राप्यनर्थस्वभावता । उपादेयविपरीतस्योपादानात् । अर्थप्रतिपक्षो ह्यत्रानर्थः । अधर्मानृतवत् । यथा ह्यधर्मानृतशब्दाभ्यां नोत्तरपदार्थाभावमात्रमभिधीयते, नाप्युत्तरपदार्थतुल्योऽर्थः, किं तर्हि एतत्प्रतिपक्षस्यैवाभिधानं, एवमिहाप्यनर्थशब्देन अर्थप्रतिपक्षस्यैवाभिधानम् । यथा अनर्थो वैरिणामापतित इत्येवमादौ । तेन यत्रोत्कृष्टेन निकृष्टः परिगृह्यते तत्र दुःखहेतुत्वादर्थप्रतिपक्षत्वेनानर्थस्वभावता । यत्र तु निकृष्टेनोत्कृष्टः परिगृह्यते तत्रोत्कृष्टस्य सुखहेतुत्वेनोपादेयत्वादर्थस्वभावता । तदिदमुक्तम्—**अर्थानर्थस्वभावमिति** । तत्र समपरिवृत्तेरुदाहरणम्—

उरो दत्वामरारीणां येन युद्धेष्वगृह्यत ।
हिरण्याक्षवधाद्येषु यशः सार्कं जयश्रिया ॥

अत्र उरोदानेन उत्साहो लक्ष्यते यश्चात्र लक्ष्यमाणस्यार्थस्योत्साहस्योपायतया प्रतीयते । अभिधेयोऽर्थो वक्षसो दानं नाम यो हि यत्र वक्ष उद्यमयति स तत्रोत्सहत इति तत्प्रतिभावच्छादितस्योत्साहस्य प्रतीतेः तदपेक्षया समेन समस्य परिवर्तनम् । उरोयशसोः समत्वात् ।

न्यूनपरिवृत्तेस्तूदाहरणम्—

नेत्रोरगबलभ्राम्यन्मन्दराद्रिशिरश्च्युतैः ।
रत्नैरापूर्य दुग्धाब्धिं यः समादत्त कौस्तुभम् ॥

नेत्रभूत उरगो वासुकिः । अत्र—कौस्तुभस्योत्कृष्टस्य निकृष्टरत्नपरित्यागेन ग्रहणान्निकृष्टेनोत्कृष्टस्य परिवर्तनम् ।

विशिष्टपरिवृत्तेस्तूदाहरणम्—

यो बलौ व्याप्तभूसीम्नि मखेन द्यां जिगीषति ।
अभयं स्वर्गसद्मभ्यो दत्वा जग्राह खर्वताम् ॥

भूसीमा पृथिव्या अवधिः । मखो यज्ञः । अत्र अभयेनोत्कृष्टेन निकृष्टस्य खर्वत्वस्य ह्रस्वत्वस्य परिवर्तनं अभिधेयापेक्षया पूर्वतरोदाहरणवत्प्रतिभाति । तात्पर्यार्थापेक्षया तु नेयं परिवृत्तिः । यत्तद्देवेभ्यः अभयं प्रतिज्ञातं तदुपायभूताया वामनवेषेण खर्वतायाः परिगृहीतत्वात् ।

**इति महाश्रीप्रतीहारेन्दुराजविरचितायामुद्भटालङ्कारसारसंग्रहलघुवृत्तौ पञ्चमो वर्गः ॥**

---

## अथ षष्ठो वर्गः ।

**अनन्वयं ससंदेहं संसृष्टिं भाविकं तथा ।**
**काव्यदृष्टान्तहेतू चेत्यलङ्कारान्परे विदुः ॥**

अत्र इतिशब्दस्य वक्ष्यमाणं यदनन्वयादिलक्षणं तदुपक्षेपार्थत्वेन प्रयोगान्नानन्वयादिस्वरूपपरामर्शार्थत्वम् । इत्येवं वक्ष्यमाणलक्षणकत्वेनानन्वयादीनलङ्कारान्विदुरित्यर्थः । अतो वेदनक्रियाकर्मत्वादनन्वयमित्यादौ द्वितीया । काव्यदृष्टान्तहेतू चेत्यत्र दृष्टान्तहेतुशब्दाभ्यां काव्यशब्दः प्रत्येकमभिसंबध्यते । दृष्टान्तशब्दस्य चात्र पूर्वनिपातोऽभ्यर्हितत्वात् । अभ्यर्हितत्वं दृष्टान्तस्य दृष्टान्तप्रतिबिम्बितव्याप्तिमुखेन हेतोः प्रायेण गमकता संप्रत्ययात् ।

ससंदेहः—

**उपमानेन तत्त्वं च भेदं च वदतः पुनः ।**
**ससंदेहं वचः स्तुत्यै ससंदेहं विदुर्बुधाः ॥**

उपमानभेदपूर्वं भेदमभिदधतः कवेः कविनिबद्धस्य वा वक्तुर्वच इति

संबन्धः । संदेहोपेतवचनव्याजेन उपमानेन तत्त्वं तद्भावमभेदमुपमेयस्याभिधायोत्तरकालं यदा तस्मादुपमानात्तस्योपमेयस्य भेदोऽभिधीयते तदा ससंदेहोऽलङ्कारः । ननु उपमानेन सह पूर्वमभेदेऽभिहिते सति पुनर्यदि तस्माद्भेदस्याभिधानं क्रियते । एवं सति गजस्नानं प्राप्नोतीत्याशङ्क्योक्तम्— **स्तुत्यै इति** । स्तुत्यर्थत्वेन एवंविधा अभिधा समाश्रीयत इत्यर्थः । तस्योदाहरणम्—

> हस्ते किमस्य निःशेषदैत्यहृद्दलनोद्भवम् ।
> यशःसंचय एष स्यात्पिण्डीभावोऽस्य किंकृतः ॥
> नाभिपद्मस्पृहायातः किं हंसो नैष चञ्चलः ।
> इति यस्याभितः शङ्खमशङ्किष्टार्जवो जनः ॥

आर्जवो मूर्खः । ऋजुत्वयोगात् । अत्र शङ्ख उपमेयः । यशःसंचयो हंसश्चोपमानम् । तयोश्च पूर्वमभेदसंदेहव्याजेनाभिहितः किमेष यशःसंचयः स्यादिति, तथा किं हंस इति पुनश्चात्रोपमानादुपमेयस्य भेदो वर्णितः । यशःसंचयात्तावद्भेदोपवर्णनं पिण्डीभावोऽस्य किंकृत इति । यशःसंचयः खलु प्रसरणशीलः । अस्य तु तद्विरुद्धः पिण्डीभावो दृश्यते । तेन नायं यशःसंचय इति । हंसात्तु भेदाभिधानं नैव चञ्चल इति । हंसस्य हि चञ्चलत्वं नाम धर्मः । इह च तन्नोपलभ्यते, तस्मान्नैव हंस इति । एवंविधस्य चात्राभिधानस्य फलं स्तुतिः, यशःसंचयो भगवता स्वहस्तवर्ती कृत इति, तथासंभाव्यमानहंसागमनं त्रिभुवनोत्पत्तिनिबन्धनं यत्तन्नाभिनलिनं तद्वान् भगवानिति ॥

ससंदेहस्य भेदान्तरमाह—

> **अलङ्कारान्तरच्छायां यत्कृत्वा धीषु बन्धनम् ।**
> **असंदेहेऽपि संदेहरूपं संदेहनाम तत् ॥**

छाया शोभा । यत्र संदेहाभावेऽपि संदेहस्योपनिबन्धे सति न पूर्ववदुपमानादुपमेयस्य भेद उपनिबध्यते किंतर्ह्यभेद एव संशयच्छायया । तथाविधस्य चोपनिबन्धस्य फलमलङ्कारान्तरोपजनिता सौन्दर्यप्रतिपत्तिः । यदाह—**धीष्वलङ्कारान्तरच्छायां कृत्वा इति** । तत्रापि संदेहालङ्कारः ।

तस्योदाहरणम्—

नीलाब्दः किमयं मेरौ धूमोऽथ प्रलयानले ।
इति यः शङ्क्यते श्यामः पक्षीन्द्रेऽर्कत्विषि स्थितः ॥

अत्र मेरोरुपरिवर्ती नीलो बलाहकः कल्पान्तवह्न्याश्रयश्च धूमः इत्येतदुभयमुपमानम् । गरुडारूढस्तु भगवान् कृष्णवपुरुपमेयः । तेन च उपमानद्वयेन संदेहव्याजेन भगवानापादिताभेद उपनिबद्धः किमयमेवंविधः अथैवंविधः इति । ताभ्यां चोपमानाभ्यामुपमेयस्य पूर्ववद्भेदनिबन्धनं नात्र किंचिदभिहितम् । फलं चैवमभिधानस्योपमालङ्कारध्वननम् । एवंविधोपमानद्वितयसदृशो भगवान्वैनतेयारूढ इति ।

अनन्वयः—

**यत्र तेनैव तस्य स्यादुपमानोपमेयता ।**
**असादृश्यविवक्षातस्तमित्याहुरनन्वयम् ॥**

यत्र तेनैव न तु वस्त्वन्तरेण तस्यैव वस्त्वन्तरस्योपमानोपमेयभावो भवेत्तत्र वस्त्वन्तरानुगमाभावादनन्वयाख्योऽलङ्कारः । ननु च सादृश्यसंबन्धे सति प्राकरणिकमुपमेयमप्राकरणिकं तूपमानमित्युपमानोपमेययोर्लक्षितत्वात्कथमेकस्यैवोपमितिक्रियायां कर्मत्वं करणत्वं च संभवतीत्याशङ्क्योक्तम्—**असादृश्यविवक्षात इति** । नात्रोमपानोपमेयभावे तात्पर्यं किन्तूपमेयोपमावदुपमानान्तरव्यावृत्तावित्यर्थः । इतिशब्दोऽत्र वक्ष्यमाणोदाहरणोपक्षेपार्थत्वादनन्वयशब्देन नाभिसंबध्यते । तेन अनन्वयमिति द्वितीया ।

तस्योदाहरणम्—

यस्य वाणी स्ववाणीव स्वक्रियेव क्रियामला ।
रूपं स्वमिव रूपं च लोकलोचनलोभनम् ॥

अत्र वाणीक्रियारूपाणां त्रयाणामनुपमतया लोकोत्तरत्वं प्रतिपादयितुमात्मनैवोपमानोपमेयभावो निबद्धः ।

संसृष्टिः—

**अलङ्कृतीनां बह्वीनां द्वयोर्वापि समाश्रयः ।**
**एकत्र निरपेक्षाणां मिथः संसृष्टिरुच्यते ॥**

बहूनामलङ्काराणां परस्परनिरपेक्षाणां द्वयोर्वा तथाविधयोरेकत्र शब्द एव अर्थ एव वा उपनिबन्धे सति संसृष्टिरलङ्कारः। यत्र तु परस्परसापेक्षत्वं तत्र सन्देहैकशब्दाभिधानानुग्राह्यानुग्राहकसङ्करास्त्रयः पूर्वमभिहिताः। यत्र च शब्दार्थलक्षणाश्रयद्वितयनिष्ठतया अनेकालङ्कारोपनिबन्धस्तत्रापि शब्दार्थवर्त्यनेकालङ्कारसंकर उक्तः। एतद्वैलक्षण्येन तु संसृष्टिः। तस्या उदाहरणम्—

त्वत्कृते सोऽपि वैकुण्ठः शशीवोषसि चन्द्रिकाम्।
अप्यधारां सुधावृष्टिं मन्ये त्यजति तां श्रियम्॥
तदुत्तिष्ठातिधन्येन केनापि कमलेक्षणे।
वरेण सह तारुण्यं निर्विशन्ती गृहे वस॥

निर्विशन्ती उपभुञ्जाना। अत्र शशी उषसि चन्द्रिकामिव वैकुण्ठः त्वत्कृते श्रियं त्यजति इत्युपमा। अधारां सुधावृष्टिमिति रूपकम्। तथा ह्यत्र लक्ष्म्याः सर्वे पीयूषवृष्टेः संबन्धिनो धर्मा विद्यन्ते केवलं धारासंबन्धो नास्तीत्युपमानगतैकगुणनिवृत्तिद्वारिका शिष्टोपमानगतसकलगुणाभ्यनुज्ञारूपारोपणावगम्यते, यथा अयं पुरुषः अकरो हस्तीति। तदेतस्मिन् श्लोके उपमाया रूपकस्य च द्वयोरलङ्कारयोः संसृष्टिः। तयोः केवलाभिधेयाश्रयत्वात्परस्परनिरपेक्षत्वाच्च। 'तदुत्तिष्ठ' इत्येतच्छ्लोकापेक्षया तु 'कमलेक्षणे' इति समासोपमात्मकमुपमाभेदमाश्रित्य पूर्वोक्तालङ्कारद्वयसंकलनया बहूनामलङ्काराणां संसृष्ट्युदाहरणदिक्प्रदर्शनं द्रष्टव्यम्॥

भाविकम्—

**प्रत्यक्षा इव यत्रार्था दृश्यन्ते भूतभाविनः।**
**अत्यद्भुताः स्यात्तद्वाचामनाकुल्येन भाविकम्॥**

सांप्रतिकेन प्रध्वंसाभावेनोपलक्ष्यमाणाः पदार्थाः भूताः, यथा इदानीं युधिष्ठिरादयः। ये तु सांप्रतिकेन प्रागभावेन उपलक्ष्यन्ते ते भाविनः, यथा इदानीं भगवदवतारः कल्की भविष्णुयशाः। एवमनन्तरोपलक्षिताः भूता भाविनश्च येऽर्थास्ते सांप्रतिकप्रध्वंसाभावप्रागभावविविक्ततया वर्त-

मानायमानाः प्रत्यक्षा इव यत्र दृश्यन्ते तद्भाविकं नामालङ्कारो भवेत् । अत्र हेतुर्वाचामनाकुलता अर्थानां चात्यद्भुतत्वम् । तदुक्तम्—**वाचामनाकुल्येनेति । अत्यद्भुता इति च ।** तत्र वाचामनाकुलता व्यस्तसंबन्धरहितलोकप्रसिद्धशब्दोपनिबन्धाज्झगित्यर्थप्रतीतिकारिता । तस्यां हि सत्यां कवेः संबन्धी यो भावः आश्रयः शृङ्गारादिरससंवलितचतुर्वर्गोपायभूतविशिष्टार्थोल्लेखी स कविनैव सहृदयैः श्रोतृभिः स्वाभिप्रायेऽभेदेन तत्तत्काव्यप्रतिबिम्बितरूपतया साक्षात्क्रियते । श्रोतृणामपि हि तथाविधस्वच्छशब्दानुभवद्रावितान्तरात्मनां सहृदयानां स्वाभिप्रायप्रतिमुद्रा तत्र संक्रामति । अतः कवेर्योऽसावभिप्रायस्तद्गोचरीकृता भूता भाविनोऽपि पदार्थास्तत्र सहृदयैः श्रोतृभिः स्वाभिप्रायाभेदेन प्रत्यक्षा इव दृश्यन्ते । यथा चात्र शब्दगतमनाकुलत्वमनन्तरोक्तेन प्रकारेण हेतुस्तथार्थगतमपि चित्रोदात्तार्थोपनिबन्धहेतुकमत्यद्भुतत्वं द्रष्टव्यम् । तदुक्तं भाविकमुपक्रम्य **भामहेन**—"चित्रोदात्ताद्भुतार्थत्वं कथायां स्वभिनीतता । शब्दानाकुलता चेति तस्य हेतून् प्रचक्षते" इति ॥ स्वभिनीततेत्यभिनयादिद्वारेण शृङ्गारादिरससंवलितत्वं चतुर्वर्गोपायस्योक्तम् । तदेवमेवंविधहेतुनिबन्धनं कविश्रोतृभावद्वितयसंमीलनात्मकं भाविकं द्रष्टव्यम् ।

अत एव चात्र कविसंबन्धिनो भावस्य श्रोतृभावाभेदाध्यवसितस्य पुरःस्फुरद्रूपस्य विद्यमानत्वाद्भाविकव्यपदेशः । भावोऽस्मिन् विद्यते इति भाविकम् । तदाहुः—"रसोल्लासी कवेरात्मा स्वच्छे शब्दार्थदर्पणे । माधुर्यौजोयुतप्रौढे प्रतिबिम्ब्य प्रकाशते । संपीतस्वच्छशब्दार्थद्रावितान्यन्तरस्ततः । श्रोता तत्साम्यतः पुष्टिं चतुर्वर्गे परां व्रजेत्" इति । स्वच्छ इति प्रसादगुणोऽभिहितः । प्रौढ इति तु सालङ्कारता । संपीतौ सम्यगास्वादितौ । तत्साम्यत इति स्वाभिप्रायाभेदेन कविगतस्याभिप्रायस्याध्यवसानादित्यर्थः । तस्योदाहरणम्—

करोषि पीडां प्रीतिं च निरञ्जनविलोचना ।
मूर्त्यानया समुद्वीक्ष्य नानाभरणशोभया ॥

अत्राभरणोचितमूर्तित्वेऽपि निरञ्जनविलोचनत्वोपलक्षितादाभरणत्यागात्पीडा । सहजसौन्दर्यनिर्भरत्वेन तु आभरणसंपाद्यायाः शोभायाः परिदृश्यमानत्वात्प्रीतिः । तेनात्र सांप्रतिकप्रध्वंसाभावोपलक्षितत्वाद्भूषणसंबन्धो व्यतीतोऽप्यद्भुतो योऽसौ वपुःप्रकर्षस्तद्वशेन प्रत्यक्ष इव कविनोपनिबद्धः । तथैव चासौ सहृदयानां चमत्कारमावहति । संततमुत्कृष्टतया वैचित्र्येण ईक्षणीया आभरणशोभा यस्यामिति बहुव्रीहिः ।

काव्यहेतुः—

**श्रुतमेकं यदन्यत्र स्मृतेरनुभवस्य वा ।**
**हेतुतां प्रतिपद्येत काव्यलिङ्गं तदुच्यते ॥**

यत्र एकं वस्तु श्रुतं सद्वस्त्वन्तरं स्मारयति अनुभावयति वा तत्र काव्यलिङ्गं नामालङ्कारः । पक्षधर्मत्वान्वयव्यतिरेकानुसरणगर्भतया यथा तार्किकप्रसिद्धा हेतवो लोकप्रसिद्धवस्तुविषयत्वेनोपनिबध्यमाना वैरस्यमावहन्ति न तथा काव्यहेतुः अतिशयेन सर्वेषां जनानां योऽसौ हृदयसंवादी सरसः पदार्थस्तन्निष्ठतया उपनिबध्यमानत्वात् । अतः काव्यलिङ्गमिति काव्यग्रहणमुपात्तम् । न खलु तच्छास्त्रलिङ्गं किं तर्हि काव्यलिङ्गमिति काव्यग्रहणेन प्रतिपाद्यते ।

ननु काव्यग्रहणेन कथं काव्यस्य सरसपदार्थनिष्ठतोपदर्श्यते । काव्यस्य सरसत्वात् । काव्यं खलु गुणसंस्कृतशब्दार्थशरीरत्वात् सरसमेव भवति, न तु नीरसम् । तथाहि—गुणाः काव्यस्य माधुर्यौजःप्रसादलक्षणाः । तत्र माधुर्यमाह्लादकत्वम्, ओजो गाढता, प्रसादस्त्वव्यवधानेन रसाभिव्यक्त्यनुगुणता । तदेतेषां त्रयाणां गुणानां मध्यात्प्रसादस्य प्राधान्यम् । माधुर्यौजसोस्तु तत्तद्रसाभिव्यक्त्यानुगुण्येन तारतम्येनावस्थितयोः प्रसाद एव सोपयोगता । एवं च तत्र तद्रसानुगुण्येन माधुर्यौजोभ्यां तारतम्येनावस्थिताभ्यां उपकृतो योऽसौ प्रसादात्मा रसानामव्यवधानेन प्रतीतिहेतुर्गुणस्तदुपेतशब्दार्थशरीरत्वेन काव्यस्यावस्थानात्सरसतैव भवति, न तु नीरसता । यद्येवमिदानीं गुणैरेव कृतकृत्यत्वात्काव्यस्यालङ्काराणां तत्र निरुपयोगता

प्राप्नोति । नैवं गुणाहितशोभे काव्ये अलङ्काराणां शोभातिशयविधायित्वा-ल्लौकिकालङ्कारवत् । यथाहि लौकिकानामलङ्काराणां गुणसंस्कृते युवति-वपुषि निबध्यमानानामलङ्कारता एवं काव्यालङ्काराणामपि द्रष्टव्यम् ।

ननु निर्गुणेऽपि काव्ये अलङ्काराणां गुणवच्छोभाविधायित्वं कस्मान्नेष्यते । अपरिदृष्टत्वात् । न खलु निर्गुणे काव्ये निबध्यमानानामलङ्काराणां जरद्योषिदलङ्कारवच्छोभाविधायित्वं दृश्यते । तथाहि—जरद्योषित्यलङ्कारा निबध्यमाना न तस्याः शोभां कुर्वन्ति, प्रत्युत तस्यां निबध्यमानानां तेषामात्मीयमेव सौभाग्यं हीयते । तथा काव्यालङ्काराणामपि निर्गुणे काव्ये निबध्यमानानां काव्यशोभाहेतुत्वाभावः स्वशोभाहानिश्च भवति । यदवोचद्भट्टवामनः—"युवतेरिव रूपमङ्ग काव्यं स्वदते शुद्धगुणं तदप्यतीव । विहितप्रणयं निरन्तराभिः सदलङ्कारविकल्पकल्पनाभिः ॥ यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनायाः । अपि जनदयितानि दुर्भगत्वं नियतमलङ्करणानि संश्रयन्ते ॥" इति । अङ्गशब्द इष्टामन्त्रणे । शुद्धगुणत्वात्स्वदमानं सदलङ्कारविकल्पकल्पनाभिर्विहितपरिचयमतिशयेन स्वदते इति संबन्धः । अत एवालङ्काराणामनित्यता । गुणरहितं हि काव्यमकाव्यमेव भवति, न त्वलङ्काररहितम् । अलङ्काराणां गुणोपजनितशोभे काव्ये शोभातिशयविधायित्वात् । तदुक्तम्—"काव्यशोभायाः कर्तारो धर्मा गुणाः । तदतिशयहेतवस्त्वलङ्काराः । पूर्वे नित्याः ।" इति । पूर्वे इति गुणा इत्यर्थः । लक्ष्ये च अलङ्काररहितमपि केवलगुणसंस्क्रियमाणशब्दार्थशरीरं काव्यं दृश्यते, यथा अमरुकस्य कवेरनिबद्धश्रृङ्गाररसस्यन्दी श्लोकः—"कथमपि कृतप्रत्यापत्तौ प्रिये स्खलितोत्तरे विरहकृशया कृत्वा व्याजप्रकल्पितमश्रुतम् । असहनसखीश्रोत्रप्राप्तिप्रमादससंभ्रमं विवलितदृशा शून्ये गेहे समुच्छ्वसितं ततः ॥" इति । न खल्वत्रार्थालङ्कारः कश्चित्परिदृश्यते । अथ माधुर्यौजोभ्यां परिबृंहितस्य प्रसादस्य विद्यमानत्वात्काव्यरूपता ।

ननु चात्रापि ईर्ष्याविप्रलम्भविरहविप्रलम्भश्रृङ्गाराभ्यां स्वतिरोधानेनो-

पक्कृतः संभोगशृङ्गारो नायिकानिष्ठो निबद्धस्तद्योगाच्च रसवत्त्वमलं भविष्यति । तथाहि 'कथमपि कृतप्रत्यापत्तौ प्रिये' इत्यत्र भागे विरहविप्रलम्भपूर्वकः प्रियतमचित्तसांमुख्यात्मा संभोगशृङ्गारः सूचितः । स्खलितोत्तर इति तु संजातगोत्रस्खलितत्वात्प्रेयसो नायिकाया ईर्ष्याविप्रलम्भशृंगारो निबद्धः । पुनश्च विरहकृशयेत्यादिभिस्त्रिभिः पादैरवहित्थेन भावेन नायिकाधारमीर्ष्या विप्रलम्भशृङ्गारं प्रच्छाद्य संभोगशृङ्गारेण चित्तोल्लाससूचितेन वाक्यार्थसमाप्तिः कृता । तथा हि—विरहकृशेत्यादिना पादेन नायिकागतो मन्युरवच्छाद्योपदर्शितः । असहनसखीत्यादिना तु गोत्रस्खलितस्य सखीश्रोत्रप्राप्तिं विरहविप्रलम्भकारणत्वेनाशङ्क्य दृष्टिपरावृत्त्या सखीजनशून्ये गृहे परिदृष्टे यत्तन्नायिकया समुल्लसितं तदुपनिबन्धात्संभोगशृङ्गारेण वाक्यार्थो निर्वाहितः । तदेवमत्र संभोगस्य विप्रलम्भबाधेन लब्धपदबन्धस्योपनिबन्धाद्रसवत्त्वमलङ्कारः । तत्कथमत्र निरलङ्कारतोक्ता । उच्यते । न खलु काव्यस्य रसानां वालङ्कार्यालङ्कारभावः, किन्तु आत्मशरीरभावः । रसा हि काव्यस्यात्मत्वेन अवस्थिताः, शब्दार्थौ च शरीररूपतया । यथा ह्यात्माधिष्ठितं शरीरं जीवतीति व्यपदिश्यते तथा रसाधिष्ठितस्य काव्यस्य जीवद्रूपतया व्यपदेशः क्रियते । तस्माद्रसानां काव्यशरीरभूतशब्दार्थविषयतयात्मत्वेनावस्थानं, नत्वलङ्कारतया । रसाभिव्यक्तिश्च यथायोगं माधुर्यौजोभ्यां तारतम्येनावस्थिताभ्यामुपबृंहितो योऽसौ प्रसादात्मा गुणस्तेन क्रियते । अतोऽत्र विप्रलम्भशृङ्गारोपकृतस्य संभोगशृङ्गारस्य सगुणकाव्यात्मत्वेनावस्थानं, न तु काव्यं प्रति अलङ्कारतयेति युक्तमिदमुक्तं निरलङ्कारमपि काव्यं सगुणं दृश्यते इति । एवं रसान्तरेषु भावेषु रसभावाभासेषु तत्प्रशमेषु च वाच्यम् । तदाहुः—"रसाद्यधिष्ठितं काव्यं जीवद्रूपतया यतः । कथ्यते तद्रसादीनां काव्यात्मत्वं व्यवस्थितम् ॥" इति ।

यत्तु रसादीनां पूर्वमलङ्कारत्वमुक्तं तदेवंविधभेदाविवक्षया । तदेवं गुणसंस्कृतशब्दार्थशरीरत्वात्सरसमेव काव्यम् । यद्येवं गुणशून्यत्वान्नीरसे व्याकरणादौ भरतादौ च काव्यव्यपदेशो न प्राप्तः । ततश्च "वृत्तदेवा-

दिचरितशंसि चोत्पाद्यवस्तु च । कलाशास्त्राश्रयं चेति चतुर्धा भिद्यते पुनः ॥" इति भामहोदितं विरुध्यते, अत्र हि कलाश्रयशब्देन भरताद्यभिहितम् । शास्त्राश्रयशब्देन च व्याकरणादि । अतो वक्तव्यमेतत्कथं तत्र काव्यव्यपदेशः इति । उच्यते । मुख्यया तावद्वृत्त्या गुणसंस्कृतशब्दार्थशरीरमेव काव्यम् । गुणरहितशब्दार्थशरीरे तु काव्यमात्रे काव्यशब्दस्य काव्यसादृश्यादुपचारात्प्रयोगो भविष्यति । उक्तं च—"काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते, भक्त्या तु शब्दार्थमात्रवचनोऽत्र गृह्यते" इति । भक्त्येति उपचारेणेत्यर्थः । तदेवं गुणसंस्कृतशब्दार्थशरीरत्वात्काव्यस्य सरसत्वमिति । तद्विशिष्टं काव्यलिङ्गं सरसपदार्थनिष्ठमेव भवति, न तु नीरसवस्तुमात्रनिष्ठं शास्त्रलिङ्गवदित्युपपन्नम् । तार्किकाणां च हेतुव्यापारे द्वैविध्यम् । केचित्खलु तार्किका व्याप्तिग्रहणकाले यदनुभूतं व्यापकं वह्न्यादिवस्तु धूमादेर्व्याप्यस्य तत्स्मरणमात्रे धूमादिहेतुदर्शनप्रबुद्धसंस्काराणां पुरुषाणां हेतुव्यापारं मन्यन्ते । अपरे तु वह्न्यादीनां पर्वतादिधर्मविशेषसंबन्धस्य पूर्वमगृहीतस्य धूमादिहेतुव्यापारसामर्थ्येन इदानीमेव अवसेयत्वाल्लिङ्गसामर्थ्याल्लिङ्ग्यनुभवस्यैव उत्पत्तिमाहुः । तदिदमुक्तं **स्मृतेरनुभवस्य वेति** । तस्योदाहरणम्—

छायेयं तव शेषाङ्गकान्तेः किञ्चिदनुज्ज्वला ।
विभूषाघटनोद्देशान्दर्शयन्ती दुनोति माम् ॥

अत्र विभूषणविन्यासास्पदभूता ये कण्ठादयस्तदवशिष्टानामङ्गानां यासौ कान्तिः दीप्तिः तस्या अनुज्ज्वला मलिना यासौ छाया शोभा सा लिङ्गं, तत्सामर्थ्याच्च भूषाविन्यासप्रदेशानां भूषणसंबन्धोऽतीतोऽनुमीयते । तेन तत्काव्यलिङ्गम् ॥

काव्यदृष्टान्तः—

**इष्टस्यार्थस्य विस्पष्टप्रतिबिम्बनिदर्शनम् ।**
**यथेवादिपदैः शून्यं बुधैर्दृष्टान्त उच्यते ॥**

इष्टस्य प्राकरणिकतया प्रतिपादयितुमभिमतस्यार्थस्य यत्र विस्पष्टतया प्रतिबिम्बं सदृशं वस्तु निदर्श्यते तत्र काव्यदृष्टान्तो नामालङ्कारः ।

ननु "कोपादेकतराघातनिपतन्मत्तदन्तिनः । हरेर्हरिणयुद्धेषु कियान्व्याक्षेपविस्तरः" इत्येवमादावपि अप्रस्तुतप्रशंसायामिष्टार्थप्रतिबिम्बनिदर्शनं विद्यते । तथाहि—अत्र रामदेवस्य मारीचवधे व्यापारो निरायासो हरिणहननोद्योगिकेसरिकिशोरप्रतिबिम्बितत्वेन निदर्शितः । अतोऽत्रापि दृष्टान्ततताप्रसङ्गः । नैतत् । यत एतदर्थमेव विस्पष्टग्रहणमुपात्तम् । अत्र हि प्रतिबिम्बादेव बिम्बस्योन्नयनाद्विस्पष्टरूपतया इष्टस्यार्थस्य प्रतिबिम्बनिदर्शनं नास्ति । यत्र तु इष्टमर्थं स्वकण्ठेनोपादाय तस्य प्रतिबिम्बमुपदर्श्यते तत्र दृष्टान्तत्वम् । अतो नातिव्याप्तिः । उपमादावप्येवंविधस्य रूपस्य संभव इति तन्निराकरणार्थमुक्तम्—**यथेवादिपदैः शून्यमिति** । आदिग्रहणेनात्र साधारणधर्मस्यापि परिग्रहः । तस्योदाहरणम्—

किञ्चात्र बहुनोक्तेन व्रज भर्तारमाप्नुहि ।
उदन्वन्तमनासाद्य महानद्यः किमासते ॥

अत्र भगवतीकर्तृकाया वरप्राप्तेर्महानदीकर्तृका उदन्वत्प्राप्तेर्विस्पष्टतया प्रतिबिम्बत्वेनोपनिबद्धा । अतो दृष्टान्तः ।

एवमेतेऽष्टकषट्कत्रिकसप्तकैकादशकषट्कैः षड्भिर्वर्गैरेकचत्वारिंशदलङ्काराः प्रतिपादिताः ।

ननु यत्र काव्ये सहृदयहृदयाह्लादिनः प्रधानभूतस्य स्वशब्दव्यापारास्पृष्टत्वेन प्रतीयमानैकरूपस्यार्थस्य सद्भावस्तत्र तथाविधार्थाभिव्यक्तिहेतुः काव्यजीवितभूतः कैश्चित्सहृदयैर्ध्वनिर्नाम व्यञ्जकत्वभेदात्मा काव्यधर्मोऽभिहितः । स कस्मादिह नोपदिष्टः । उच्यते । एष्वेवालङ्कारेष्वन्तर्भावात् । तथाहि—प्रतीयमानैकरूपस्य वस्तुनस्त्रैविध्यं तैरुक्तं वस्तुमात्रालङ्काररसादिभेदेन । तत्र वस्तुमात्रं तावत्प्रतीयते यथा—

चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य ।
आलिङ्गनोद्दामविलासवन्ध्यं रतोत्सवं चुम्बनमात्रशेषम् ॥ इति ।

अत्र हि राहुवधूरतोत्सवस्य या चुम्बनमात्रशेषता तत्कर्मका चक्राभिघातप्रसभाज्ञाकरणिका चकारेति करणलक्षणा क्रियाभिधीयते । सा चैवंविधा कार्यभूतत्वात्कारणमन्तरेणानुपपद्यमाना तथाविधवैरस्यकारि राहुशिर-

श्छेदलक्षणं कारणं नालङ्काररूपं, नापि रसादिरूपं, अपि तु वस्तुमात्ररूपं कल्पयति। अतोऽत्र वस्तुमात्रस्यैवंविधस्य शब्दव्यापारास्पृष्टस्य प्रतीयमानता, तद्विषयस्य च काव्यधर्मस्य ध्वननाभिधानस्य वाच्यवाचकव्यापारशून्यावगमनस्वभावत्वात्पर्यायोक्तालङ्कारस्पर्शित्वं, तदुक्तम्—"पर्यायोक्तं यदन्येन" इत्यादि।

ननु पर्यायोक्तशब्देन प्रकारान्तरेण उच्यमानत्वात्प्रतीयमानं वस्तु अभिधीयते। तच्चेह प्रतीयमानं प्रधानत्वादलङ्कार्यतया वक्तुं युक्तम्, न त्वलङ्कृतिकारणतया। अतः कथं तस्यालङ्कारव्यपदेशः। उच्यते। प्रधानमपि गुणानां सौन्दर्यहेतुत्वादलङ्कृतौ साधनत्वं भजति। दृश्यते हि लोके व्यपदेशः स्वाम्यलङ्करणका भृत्या इति। अतोऽत्रापि प्रतीयमानस्य सत्यपि प्रधानत्वे स्वगुणभूतवाच्यसौन्दर्यसाधकतमत्वादलङ्कारव्यपदेशो न विरुध्यते। यदि वा भगवद्वासुदेववर्तितया योऽसौ वीररसोऽवगम्यते तदपेक्षया तस्य मुख्ययैव वृत्त्या गुणभूतत्वादलङ्कारता। एवमुत्तरत्रापि यथासंभवं योज्यम्।

"स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव॥"

इत्येवमादावपि रामादीनां शब्दानामसाधारणरूपतया राज्यभ्रंशवनवाससीताहरणपितृमरणादयो दुःखैकहेतवः स्वार्थसहचारिणो वस्तुमात्ररूपा व्यङ्ग्यधर्मास्तत्परिणतरूपतया स्वार्थस्य प्रतीतिस्तद्धेतुभूतत्वात्पर्यायोक्तालङ्कारसंस्पर्शितैव। न खलु पदे पर्यायोक्तेन न भवितव्यमितीयं राज्ञामाज्ञा सूत्रकारवचनं वा। लक्षणयोगाद्धि विभक्तरूपतावस्थाप्यते। अत्र च पर्यायोक्तलक्षणं विद्यते। वाच्यवाचकव्यापारशून्यस्यावगमनात्मनः प्रकारस्य सद्भावात्। तेन कथं पर्यायोक्तता न स्यात्। एवमन्यत्रापि वस्तुमात्रे प्रतीयमाने पर्यायोक्तता वाच्या। तस्मान्न वस्तुमात्रे प्रतीयमाने तदभिव्य-

क्तिहेतुः काव्यधर्मो ध्वनिर्नामार्थान्तरम् ॥ अलङ्काराणां तु यद्यपि—

"लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्
स्मेरेऽधुना तव मुखे तरलायताक्षि ।
क्षोभं यदेति न मनागपि तेन मन्ये
सुव्यक्तमेव जलराशिरयं पयोधिः" ॥

इत्यादौ प्रतीयमानैकरूपता, तथाप्यनन्तरोक्तलक्षणेष्वलङ्कारेषु अनुप्रवेशो भविष्यति पर्यायोक्ते वा । तथा ह्यत्र श्लोके मुख्यस्य लावण्यकान्तिपरिपूरितदिङ्मुखस्य विकसितहासज्योत्स्नस्य संबोधनसामर्थ्यावसिततरलायताक्षित्वस्य च संनिधानाज्जलनिधेः क्षोभमुपपत्तिमत्त्वेन संभाव्य तद्भावो जाड्यसमूहावच्छादितस्वभावत्वादभिहितः । तथाविधार्थपर्यालोचनया चात्र मुखस्य चन्द्रेण रूपणा प्रतीयते । चन्द्रसंनिधानाज्जलनिधेः क्षोभस्योत्पाददर्शनात् । न च यस्यालङ्कारस्य प्रतीयमानरूपता तस्येहालङ्कारत्वं केनचिन्निवारितमिति प्रतीयमानरूपतया रूपकाख्योऽलङ्कारो भविष्यति । अथवा पर्यायोक्त्या रूपकस्यात्रावसितत्वात्पर्यायोक्तमलङ्कारः ।

"सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥"

इत्यादौ तु शूरादिभिः सह सुवर्णपुष्पपृथिवीकर्मकस्य चयनस्यानुपपद्यमानान्वयत्वात्सादृश्यस्यान्वयेनोपमेयभूतस्य बहुलाभत्वस्य तत्सदृशस्य या लक्षणा तद्द्वारेण गर्भीकृतोपमानोपमेयभावा असंभवद्वाच्यार्था निदर्शना द्रष्टव्या । यदुक्तम्—"अभवन्वस्तुसंबन्ध" इत्यादि । भट्टवामनेन चात्र वक्रोक्तिव्यवहारः प्रवर्तितः । यदवोचत्—"सादृश्याल्लक्षणा वक्रोक्तिरि"ति ।

"सर्वैकशरणमक्षयमधीशमीशं धियां हरिं कृष्णम् ।
चतुरात्मानं निष्क्रियमरिमथनं नमत चक्रधरम् ॥"

इत्यादावपि श्लेषः । तथा ह्यत्र सर्वैकशरणमक्षयमित्यादीनां शब्दानामर्थभेदेन भिन्नत्वे सति यथायोगमेकप्रयत्नोच्चार्याणामेकप्रयत्नोच्चार्यशब्दस-

दृशानां वोच्चारणम् । अतो विरोधालङ्कारप्रतिभोत्पत्तिहेतुरत्र श्लेषः । यदुक्तम्—"एकप्रयत्नोच्चार्याणाम्" इत्यादि ।

एवमलङ्कारान्तरेष्वपि प्रतीयमानेषु वाच्यम् । तेनालङ्कारनिष्ठस्यापि अभिव्यञ्जकत्वस्योक्तेष्वलङ्कारेष्वन्तर्भावादव्याप्त्यभावः । रसभावतदाभासतत्प्रशमानां तु प्रतीयमानतायामुदाहरणम्—

"याते गोत्रविपर्यये श्रुतिपथं शय्यामनुप्राप्तया
निर्ध्यातं परिवर्तनं पुनरपि प्रारब्धुमङ्गीकृतम् ।
भूयस्तत्प्रकृतं कृतं च शिथिलक्षिप्तैकदोर्लेखया
तन्वङ्ग्या न तु पारितः स्तनभरः क्रष्टुं प्रियस्योरसः ॥" इति ।

तथा हि—अत्र गोत्रस्खलितस्य श्रुतिपथप्राप्तेरीर्ष्याविप्रलम्भशृङ्गारो नायिकायाः संमुखीभूतोऽपि संभोगशृङ्गारेण स्वहेतुसामग्र्यप्रतिलब्धप्रकर्षेण तिरोधाय प्रदर्शितः । निर्ध्यातं परिवर्तनमित्यादिना हि यथाक्रममीर्ष्याविप्रलम्भशृङ्गारानुभावस्य परिवर्तनस्य दर्शनप्रार्थनाध्यवसायानुष्ठानात्मिकाश्चतस्रोऽवस्थाः संभोगशृङ्गारमन्थरीकृतस्वस्वभावत्वेनोपवर्णिताः । पुनश्च संभोगशृङ्गारेण वाक्यार्थो निर्वाहितो 'न तु पारितः' इत्यादिना । अतोऽत्र संभोगशृङ्गारस्येर्ष्याविप्रलम्भशृङ्गारतिरोधानहेतोः प्रतीयमानता । तत्र च पूर्वं रसवत्त्वलक्षणोऽलङ्कारः प्रतिपादितो 'रसवद्दर्शित' इत्यादिना । एवं रसान्तरेष्वपि वाच्यम् ।

यत्रापि भावास्तथा रसभावाभासा रसभावतदाभासप्रशमाश्च प्रतीयमानास्तत्रापि यथाक्रमं प्रेयस्वदूर्जस्वित्समाहितलक्षणालङ्कारयोगो वाच्यः । एवमेतत्प्रधानभूतेषु रसादिषूक्तम् । गुणभूतेष्वपि च रसेषूदात्तालङ्कारः प्रतिपादितः 'चरितं च महात्मनाम्' इत्यादिना । अतश्च रसादिष्वभिव्यञ्जकत्वस्य नार्थान्तरता । एवं च त्रिविधेऽपि प्रतीयमानेऽर्थे यच्छब्दानां व्यञ्जकत्वमनन्तरोपवर्णितेषूदाहरणेषु षट्प्रकारतयोपदर्शितं तस्योक्तेष्वेवालङ्कारेष्वन्तर्भावाद्व्याप्तिः ।

षड्प्रकारता चात्र त्रिविधप्रतीयमानार्थनिष्ठस्यापि व्यञ्जकत्वस्य वाच्यस्य विवक्षितत्वाविवक्षितत्वाभ्यामुक्ता। तथा हि—द्विविधं व्यञ्जकत्वं, वाचकशक्त्याश्रयं वाच्यशक्त्याश्रयं च। तत्र वाचकशक्त्याश्रयमलङ्काराणामेव व्यङ्ग्यत्वादेकप्रकारम्। तत्र ह्यलङ्कारा एव व्यज्यन्ते, न तु वस्तुमात्रं नापि रसादयः, यदुक्तम्—"आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते। यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः॥" इति। वाच्यशक्त्याश्रयं तु रसादिवस्तुमात्रालङ्काराभिव्यक्तिहेतुत्वात्त्रिविधम्। तत्र यत्तावद्वाचकशक्त्याश्रयं व्यङ्ग्यभूतालङ्कारैकनियतं शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यतया सहृदयैर्व्यञ्जकत्वमुक्तं "सर्वैकशरणमक्षयम्" इत्यादौ, तत्र शब्दशक्त्या ये प्रतीयन्ते विरोधादयोऽलङ्कारास्तत्संस्कृतस्वभावं वाच्यमवगम्यते। अतस्तत्र वाच्यस्य विवक्षैव।

यत्तु वाच्यशक्त्याश्रयं "याते गोत्रविपर्यये श्रुतिपथम्" इत्याद्यसंलक्ष्यक्रमरसादिव्यङ्ग्यनिष्ठं व्यञ्जकत्वमुक्तं तत्रापि वाच्यस्य विवक्षितत्वमेव। वाच्यभूतानुभावादिविवक्षयैव व्यङ्ग्यरसादिप्रतीतेरुत्पादात्। तदेवं वाचकशक्त्याश्रयव्यङ्ग्यभूतालङ्कारैकनियते वाच्यशक्त्याश्रये चासंलक्ष्यक्रमरसादिव्यङ्ग्यनिष्ठे व्यञ्जकत्वे वाच्यस्य विवक्षितत्वमेव। वस्तुमात्रालङ्कारविषयस्य तु वाच्यशक्त्याश्रयस्य व्यञ्जकत्वस्य प्रत्येकं वाच्यस्य विवक्षितत्वाविवक्षितत्वाभ्यां द्वैविध्यम्। तथाहि 'चक्राभिघातप्रसभाज्ञये'त्यादौ वस्तुविषये व्यञ्जकत्वे वाच्यस्य विवक्षितत्वं कार्यविवक्षापूर्वकत्वेन कारणप्रतीतिप्रसवात्। 'स्निग्धश्यामलकान्ती'त्यादौ तु रामादिशब्दानामर्थान्तरसंक्रमितवाच्यानां वाच्यमविवक्षितम्। व्यङ्ग्यधर्मान्तरपरिणतत्वात्। एवं वस्तुमात्रविषये व्यञ्जकत्वे वाच्यस्य विवक्षाविवक्षे,ऽलङ्कारविषयेऽपि वाच्यशक्त्याश्रये व्यञ्जकत्वे। 'लावण्यकान्ती'त्यादौ एकस्मिन्मन्ये इत्येतस्मिन्शब्दे यो विशेषोक्त्युत्प्रेक्षयोरनुप्रवेशस्तद्वशेन समासादितस्वभावो योऽसावेकशब्दाभिधानसंकरस्तत्प्रतिभोत्पत्तिहेतुश्लेषप्रौढीकृतं वाच्यं विवक्षितम्। तन्मूलकत्वेन रूपकप्रतीतेरुत्पादात्।

"सुवर्णपुष्पां पृथिवी'मित्यादौ तु वाच्यस्याविवक्षा । उपमेयस्य बहुलाभत्वस्य तत्सदृशस्य या लक्षणा तस्या अत्यन्ततिरस्कृतवाच्यमूलत्वात् । यदि त्वत्र न तिङन्तेनोपमानमस्तीति दृष्ट्या तद्भावाध्यवसानात्सुवर्णपुष्पपृथिवीचयनलक्षणोपमानावच्छादितरूपत्वेन शूरादिविषयस्य बहुलाभत्वस्योपमेयस्य प्रौढोक्त्या प्रतिपत्तिः, ततोऽत्र प्रौढोक्तिमात्रनिष्पन्नशरीरस्य वाच्यस्यार्थस्य प्राधान्या"द्भेदेऽनन्यत्वमि"त्येवमात्मकतयोपवर्णितमतिशयोक्तिभेदत्वं वाच्यम् । व्यङ्ग्या ह्युपमा तदानीमत्र गुणीभवति ।

एवमलङ्कारनिष्ठस्यापि व्यञ्जकत्वस्य वाच्यविवक्षितत्वाविवक्षितत्वाभ्यां द्वैविध्यम् । यत्र चाविवक्षा वाच्यस्य वस्तुनिष्ठेऽलङ्कारनिष्ठे वा व्यञ्जकत्वे तत्र व्यङ्ग्यरसादेर्झगित्यवगम्यमानत्वादसंलक्ष्यक्रमता द्रष्टव्या । यदुक्तं **भट्टवामनेन**—"लक्षणायां हि झगित्यर्थप्रतिपत्तिक्षमत्वं रहस्यमाचक्षते" इति । अत एव च सहृदयैर्यत्र वाच्यस्य विवक्षितत्वं तत्रैव वस्त्वलङ्कारयोः प्रतीयमानयोर्वाच्येन सह क्रमव्यवहारः प्रवर्तितोऽर्थशक्तिमूलानुरणनरूपव्यङ्ग्यो ध्वनिरित्युक्तं, न तु वाच्यविवक्षायामपि । यत्र च वाच्यस्याविवक्षा पूर्वमुक्ता "रामोऽसी'ति 'सुवर्णपुष्पा'मिति च तत्र वयमधिकारोपेतप्रस्तुतार्थानुबन्धिवस्तूपनिबन्धादप्रस्तुतप्रशंसाभेदत्वमेव न्याय्यं मन्यामहे । यदुक्तं 'अधिकारादपेतस्ये'त्यादि ।

यत्तु पूर्वपर्यायोक्तभेदत्वं 'स्निग्धश्यामलकान्ती'त्यादौ रामादीनां शब्दानामभिहितं तदुपक्रममात्ररूपतया द्रष्टव्यम् । विवक्षितवाच्यस्य पर्यायोक्तभेदत्वात् । यत्र खलु वाच्यविवक्षापूर्वकत्वेन अर्थान्तरं प्रतीयते 'चक्राभिघाते'त्यादावुदाहरणचतुष्टये तत्र पर्यायोक्तभेदता । पर्यायोक्तलक्षणस्याप्रस्तुतप्रशंसालक्षणविचारवशेन तद्व्यतिरिक्तविषयावगाहित्वात् । यत्र त्वविवक्षिते वाच्येऽर्थान्तरस्य प्रतीतिस्तत्राप्रस्तुतप्रशंसा । अतश्च पर्यायोक्ताप्रस्तुतप्रशंसयोरेव यथाक्रमं विवक्षिताविवक्षितवाच्ययोः सर्वध्वनिभेदसामान्यभूतयोर्ध्वनिभेदयोरन्तर्गतिर्वाच्या । 'सुवर्णपुष्पां पृथिवीम्' इत्यादौ तु विदर्शनाभेदत्वं यत्पूर्वमुक्तं तदधिकारोपेतप्रस्तुतार्थानुबन्धिवस्तूपनिबन्धा-

स्मत्वेनासंभवद्वाच्याया विदर्शनाया अप्रस्तुतप्रशंसाभेदत्वादुपपद्यत एव। एतच्च विद्वद्भिर्विचार्य गृहीतव्यं न त्वविमृश्यैवासूयितव्यमित्यलमतिवाचालतया।

तदेवं वाचकशक्तिमूलेऽलङ्कारैकनियते वाच्यशक्तिमूले च रसादिविषये व्यञ्जकत्वे वाच्यस्य विवक्षितत्वैकरूपत्वम्। वस्त्वलङ्कारविषये तु वाच्यशक्तिमूले व्यञ्जकत्वे प्रत्येकं वाच्यस्य विवक्षितत्वाविवक्षितत्वाभ्यां द्विभेदता। अतस्तत्समाश्रयणेन त्रिविधप्रतीयमानार्थनिष्ठस्यापि व्यञ्जकत्वस्य षट्प्रकारता भवति। एतेषां च षण्णां भेदानां मध्याद्द्वयोर्भेदयोर्वाच्यस्याविवक्षोक्ता। चतुर्षु विवक्षितत्वम्। यत्र च विवक्षितत्वं तत्र वाच्यस्य स्वतःसंभवित्वात्प्रौढोक्तिमात्रनिष्पादितशरीरत्वाच्च द्वैविध्यम्। अतस्तत्र तस्याष्टौ भेदा भवन्ति। एते चाष्टौ भेदा वाच्यस्य यत्राविवक्षा तद्विषयाभ्यां पूर्वोदिताभ्यां द्वाभ्यां भेदाभ्यां संकलिताः सन्तो दश संपद्यन्ते। एत एव तु पदवाक्यप्रकाश्यतया द्वैगुण्यं भजमाना विंशतिर्भवन्ति। वर्णसंघटनाप्रबन्धाधारस्य व्यञ्जकत्वस्य कृत्तद्धितादिगतस्य च पदवाक्यानुप्रवेशेनैवाविर्भावात्। पदप्रकाश्यत्वं यथा 'रामोऽस्मीति'। 'चक्राभिघाते' त्यादौ तु वाक्यप्रकाश्यता। यथा च प्रधानभूते व्यङ्ग्ये एषा व्यञ्जकता विंशतिविधा भवति, तथा गुणीभूतेऽपि यथासंभवं योज्येति। तदाहुः—

> विवक्ष्यमविवक्ष्यं च वस्त्वलङ्कारगोचरे।
> वाच्यं ध्वनौ विवक्ष्यं तु शब्दशक्तिरसास्पदे॥
> भेदषट्के चतुर्धा यद्वाच्यमुक्तं विवक्षितम्।
> स्वतःसंभवि वा तत्स्यादथ वा प्रौढिनिर्मितम्॥
> दश भेदा ध्वनेरेते विंशतिः पदवाक्यतः।
> प्रधानवद्गुणीभूते व्यङ्ग्ये प्रायेण ते तथा॥ इति।

वस्त्वलङ्कारवाच्ये ध्वनौ प्रत्येकं वाच्यं विवक्ष्यमविवक्ष्यं चेति संबन्धः। विवक्ष्यमिति विवक्षार्हमित्यर्थः। शब्दशक्तिरसास्पद इति वाचकशक्तिस-

माश्रयं रसादिव्यङ्ग्यनिष्ठं च व्यञ्जकत्वमुक्तम् । तद्विशिष्टशक्ति व्यञ्जकभूतां रसादींश्च व्यङ्ग्यभूतानास्पदीकरोति । एवमेतद्व्यञ्जकत्वं पर्यायोक्तादिष्वन्तर्भावितम् । एतच्चेह बहुवक्तव्यत्वान्न वैतत्येन प्रपञ्चितम् । कुशाग्रीयबुद्धीनां हि दिङ्मात्र एवोपदर्शिते सति बुद्धिवल्ली प्रतानशतैर्नानादिग्व्यापित्वेन विस्तारमासादयतीति ॥

मीमांसासारमेघात्पदजलधिविधोस्तर्कमाणिक्यकोशात्
साहित्यश्रीमुरारेर्बुधकुसुममधोः शौरिपादाब्जभृङ्गात् ।
श्रुत्वा सौजन्यसिन्धोर्द्विजवरमुकुलात्कीर्तिवल्ल्यालवालात्
काव्यालङ्कारसारे लघुविवृतिमधात्कौङ्कणः श्रीन्दुराजः ॥

इति महाश्रीप्रतीहारेन्दुराजविरचितायामुद्भटालङ्कारसार-
संग्रहलघुवृत्तौ षष्ठो वर्गः ॥

# काव्यालङ्कारसारलघुवृत्तौ उदाहृतानां पद्यानामनुक्रमणी